॥ न हि ज्ञानेन सदृशम् ॥

# प्रबन्ध पारिजातः



श्री चामराजेन्द्र संस्कृत महापाठशाला विद्यार्थिनिलयः
चामराजपेट, ३ वीथी
बेंगलूर–१८.

॥ नहिज्ञानेन सदृशम् ॥

# प्रबन्ध पारिजातः

*

श्री चामराजेन्द्र संस्कृत महापाठशालाविद्यार्थि निलयः

चामराजपेट, २ वीथी

बेंगळूरु-१८

# निवेदनम्

प्रायेण अपरे वयसि पुंसां अध्यात्मविषये जिज्ञासा जायते । तदा इन्द्रियक्षोभः कुटुम्बजीवने अशान्तिः दारपुत्रादीनां औदासीन्यं आर्थिकविषये पीडा च अहमहमिकया समुल्लसन्ति । अद्यत्वे अन्तरराष्ट्रीय भावनाभिः प्रभावितानां मानवानां भावनासु पारलौकिक विषयेषु आदरः शून्यमिव दृश्यते । यौवने त्रिंशद्वर्षपर्यन्तं विदेशीयभाषां अधीत्य व्यवहृत्य व्यवहारे सर्वत्र तेषामभिप्रायानेव समालंब्य प्रवृत्तस्य भारतीयस्य कृच्छ्रेणैव भारतदेशीयसंस्कृतौ संस्कृत भाषायां च प्रीतिः सहृदयत्वं च संपत्स्यते । अस्यां अवस्थायां निर्मलज्ञान ज्योतिषां चिरंतनानां मुनीनां उपदेशवचनं केन उपायेन आधुनिकनीतिधुनी निमज्जनेन परिभूतानां अन्वीयुः ? इयं समस्या राष्ट्रीय भावनावतां सचेतनानां दूरदर्शिनां अनवरतं विषादपदमास्ते ।

वयमिदानीं देशस्य इमां आपदं निवारयितुमसमर्था अपि भारतीय ज्ञानसर्वस्वभूताः उपनिषदः भगवद्गीतां च अपरे वयसि स्पृहावतां परिचाययितुं प्रयतामहे । तत्कृते "उपनिषत् पाठावलिः," "गीतापाठावलिः" इति शीर्षिकया मूलस्थैः पदैरेव अल्पशरीरान् पाठान् अरचयाम । सामान्येन पुनरुक्तीः परिहृत्य उपनिषत्सु गीतायां च स्थूलपरिचयः यथा जायेत तथा पदसंयोजनं आदृतम् । अपि च बालानां मुखेनापि चिरन्तनानां उपदेशवचनानि श्रोतुं अवकाशाय "उपनिषद्रूपकम्" "गीतारूपकम्" इति शीर्षिकया कतिपयवाक्येष्वेव विषयोपसमर्पणे चापल्यं प्रादर्शयाम ।

दोषैकदृशः कामं भवन्तु ! सहृदयाः अस्यां दिशि कदाचित् श्रद्धादृष्टिं प्रसारयेयुः । भारतीय संस्कृतेः परिचये उपनिषदः भगवद्गीता च अपरिहरणीये वर्तते । प्राक्तना उपनिषदः दश इति कथितं, [illegible]न्ये ।

प्रतिपाद्यो विषयः अभिन्नोऽपि उपपादनधोरणी भिद्यते। एक एव दृष्टान्तः अनेकशः अनूदितः लभ्यते। " यथा अरा इव रथनाभौ " ऊर्णनाभिः सृजते गृह्णते, " मुख्यप्राणःज्येष्ठः श्रेष्ठश्च " " प्रणवविचारः " उद्गीथोपासनं " इत्यादयः पुनः २ आम्रेडिताः। एताभिः पुनरुक्तिभिः वयोवृद्धानां चेतसि किंचिदिव वैरस्यं जायेतापि। ततः यथावसरं पुनरुक्तीः परिहृत्य पाठावलिः संगृहीता।

उपनिषदः अष्टोत्तरशतसंख्याकाः इति गणना आधुनिकपण्डितानां विद्यते। परंतु सहस्र संख्यापर्यन्तं आसां रचना अस्तीति वयं शुश्रुम। भस्म-धारण, रुद्राक्ष धारणादि विषयेष्वपि उपनिषदः श्रूयन्ते। केचन मन्त्रशास्त्र मधिकृत्य प्रवृत्ताः। अन्याः शाक्तसंप्रदायं दर्शयन्ति। अपराः हठयोग-राजयोग प्रकारांश्च विवेचयन्ति। वज्रसूच्युपनिषत्प्रभृतयः जन्मना जातिं निराकुर्वन्ति। गर्भोपनिषत् प्रभृतयः शरीर वर्णनेन काशन्ते। एवं ज्ञातव्यविषयान् अशेषान् दर्शयितुमिच्छन्ति उपनिषदां कर्तारः।

यथाकामं विषयान् उपनिषन्मुद्रया निरूपणे प्राक्तनगुरुकुलेषु साक्षात्कृतधर्मणां उद्गारैः सह तोलनं दुष्करमिव भवति। अतः अर्वाचीनेषु उपनिषत्प्रणेतृषु यावत्पाण्डित्यं आसीत् तदेव उपनिषत्सु प्रतिफलितमिति वक्तुं युक्तम्।

उपनिषदां अर्थनिर्णये ब्रह्मसूत्राणि साधनानीति संप्रदायः अस्ति। इदानीं उपलभ्यमानानि ब्रह्मसूत्राणि व्यासप्रणीतानीति विश्वासः सांप्रदायिकानां विमर्शकानां च। केचन अस्मिन् विषये संशेरते। पुरा ब्रह्मसूत्राणि अन्यानि स्युः। गच्छता कालेन पण्डिताः सांख्ययोगजैनबौद्धमतान् निराकरिष्यन् नवीनानि सूत्राणि रचयामासुः। तान्यपि " ब्रह्मसूत्राणि " इदानीं इति वदन्ति। परंतु सांख्यः योगक्रमश्च वर्तमानकाले उपलभ्यमानेषु ब्रह्मसूत्रेषु निराकृतौ वर्तेते। अर्वाचीनोपनिषत्सु योगमार्गः बहुधा निरूपितः अङ्गीकृतः अभिष्टुतश्च। अतः नवीनानां उपनिषदां ब्रह्मसूत्रैः सह अन्वयो नास्ति।

आस्माकीनः अयमुपक्रमः केवलं उपनिषदां स्थूलपरिचयायैव, नतु कदाचित् पाण्डित्यस्य संपादनाय प्रभवति । स्थूलपरिचयेन उपनिषत्सु श्रद्धा जायेत । अनन्तरं तत्वजिज्ञासा उपजायेत । क्षान्तिः कष्टसहिष्णुता च यदि भवेत् गच्छताकालेन यथारुचि व्याख्यानानि अभ्यसंतु पन्थानमश्रयन्तु । एतत्कृते अयं अल्पः उपक्रमः अस्माभिराहृतो वर्तते । सहृदयाः विमत्सराः उपनिषत् पाठावलिं, गीतापाठावलिं, रुपके च यथावसरं सात्मीकुर्वन्तु इति निवेदयामः ।

यदक्षरपदभ्रष्टं मात्रहीनं च यद्भवेत् ।
तत्सर्वं क्षम्यतां देव नारायण नमोऽस्तुते ॥

चैत्रशुद्ध नवमी
बेङ्गळूरु

सम्पादकः
डा. वीरराघवाचार्यः
विशिष्टाद्वैत प्राध्यापकः
श्रीचामराजेन्द्र संस्कृत महापाठशाला
बेङ्गळूरु

## विषयानुक्रमणिका

# ॥ प्रबन्धपारिजातः ॥

"नहि ज्ञानेन सदृशम्"

## उपनिषत् पाठावलिः

### पाठः १

यजुर्वेदः शुक्लयजुर्वेदः कृष्णयजुर्वेदः इति द्विधा प्रसिद्धो वर्तते। शुक्लयजुर्वेदस्यैव "वाजसनेयसंहिता" इत्यभिख्या अस्ति। अस्यां चत्वारिंशदध्यायाः सन्ति। चत्वारिंशत्तमोऽध्यायः इयं ईशोपनिषत्। अत एवास्याः "संहितोपनिषदिति च अन्वर्थनाम समन्वेति। अस्यामुपनिषदि अष्टादशमन्त्राः सन्ति। परब्रह्मणः स्वरूपनिरूपणं, कर्मणां प्राधान्यं, तेषां अपरिहरणीयता, विद्या-अविद्यापदसूचितयोः उपासना कर्मणोः, समन्वयः, भगवत्प्रार्थनाचेति इमे प्रधानविषयाः विशदीकृताः।

इदं विश्वं सर्वं ईशा परमात्मना वास्यम्-व्याप्तं वर्तते। विश्वं नाम सदा परिवर्तनशीलं परिदृश्यमानं अपरिदृश्यमानं च। अस्मदादिभिः केवलं खगोले बंभ्रम्यमाणानि गोलान्यपि साकल्येन न दृश्यन्ते। न ज्ञायन्ते। अथवा

ऊहितुमपि न शक्यन्ते । अपिचास्मिन् अनुभूयमाने विश्वे विद्यमानाः पदार्थाः सूक्ष्माः स्थूलाः अनन्ताः अनेकरूपाश्च समुल्लसन्ति । तेषां विज्ञानमपि अस्माकं परिपूर्णतया नास्ति । सर्वमिदं विश्वं तेन सर्वनियन्त्रा व्याप्तम् । अनेन कारणेन मानवाः सुखदुःखानि ममतारहितभावनया भुञ्जीयुः ।

धनं नाम-जीवनोपकरणभूतं वस्तु । इदं स्वभावसिद्धं अथवा मनुष्य-कल्पितं च भविष्यति । मानवः स्वभोगाय सचेतनानि अचेतनानि च वस्तूनि अपेक्षते । तेषां भोगसाधनभूतानां सर्वेषामुद्देशः धनशब्देन क्रियते । कस्यापि धनं अन्याय्येन मा गृधः । कर्मनाम–कार्यान्तरनिर्वहणयोग्यतापादकः उपाय-विशेषः । इदं कर्म बहुमुखं अनेकविधं च वर्तते । आकुञ्चनप्रसारणादीनि शारीरककर्माणि । उच्छ्वास-निश्वासौ, हृदयपरिचलनं, रक्तपरिचलनं, जीर्ण-शक्तिः अनवरतपरिवर्तनकर्म च प्राणशक्तेः कर्माणि–एतानि स्वाभाविकानि । स्मरणं अवधारणं अभ्यूहश्च मानसं कर्म । शास्त्रनियमानुसारेण अनुष्ठीयमानानि नित्यनैमित्तिक काम्यरूपाणि च कर्माणि भवन्ति । परोपकाराय निर्वाह्यमानानि 'धर्मकर्माणि' इत्युच्यन्ते । कर्मणां फलमपि द्विविधम् । स्वहिताय परहिताय च । हिंसास्तेयादीनि परेषां अहिताय प्रभवन्ति । अन्ते आत्मानमपि हिंसन्ति । दानं परित्राणं परिचरणादिकं प्रथमं परहिताय अन्ततः आत्महिताय च भविष्यन्ति । अनेन प्रकारेण कर्मणां पुण्य-पाप भेदेन मुखद्वयं व्यवस्थितम् । लौकिकानि कर्माणि इहलोके फलाय भवन्ति । शास्त्रीयाणि कर्माणि परलोके हितायापि विहितानि वर्तन्ते । मानवः स्वशक्त्यनुरोधेन सर्वाणि लौकिकानि शास्त्रीयाणि च कर्माणि निर्वर्तयेत् । काल-देश-दशानुरोधेन कर्मणां निश्चये अनुष्ठाने च मानवस्यैव विशिष्टं स्वातन्त्र्यमस्ति । अयमेव नियमः, पन्थाश्च अनुल्लंघनीयो वर्तते । इमं पन्थानमतिरिच्य अन्ये पन्थानः न विद्यन्ते । विश्व-मिदं भगवता व्याप्तम् । कर्तव्यं कर्म अहं निर्वर्तयामीति बुध्या यः कर्माणि निर्वर्तयति सः कर्मभिः न लिप्यते । तस्मात् कालदेशदशानुरूपं सर्वकर्म-निर्वर्तनपूर्वकं स्वायुः शतं समाः जिजीविषेत् ।

विश्वविज्ञानमन्यत्, आत्मज्ञानमन्यत्। ये विश्वविज्ञानवन्तः अध्यात्मज्ञानं न विन्दन्ति ते अधोगतिं यास्यन्ति। ते लोकाः अन्धेन तमसा आवृताः। अध्यात्मज्ञानरहिताः आत्महनः इत्युच्यन्ते। परमात्मा एकः, मनसोपि जवीयः, न कोपि तं प्राप्तः। परन्तु तत्तत्वं सर्वानभिव्याप्य तिष्ठति। तस्मिन् स्थिता विश्वशक्तिः प्राणशक्तिःकर्म निर्वहति। तत्-परब्रह्मतत्वं दूरे अन्तिके च अस्ति। अन्तः वहिश्च तिष्ठति। कम्पते न कम्पते च। यः साधकः चराचराणि इमानि भूतानि तस्मिन् पर- वस्तुनि पश्यति, सर्वेषु च भूतेषु परमात्मानं व्याप्तं मनुते, सः कस्मादपि न विजुगुप्सते। यस्य साधकस्य प्रणिधानसमये सर्वमिदं विश्वं भगवत्स्वरूपतां भजते, तस्मिन् मोहः कः? शोकः कः? साधकः अस्य एकत्वमनुपश्यन् शोकमोहौ अतिक्रामति। सःपरमात्मा कर्मभिः अनास्कन्दितः, तत एव कायरहितः आमयविरहितश्च। कर्मकृत शरीररहितः पुण्यपाप रहितश्च। स सर्वज्ञः सर्वान् परिभवति। स्वयं ज्योतिः सर्वान् अर्थान् अनादिकालतः तत्त्वतः विदधे।

विद्या नाम-भगवत्प्राप्तिसाधनं उपायः। अविद्या नाम-पुण्यपापरूप योग्यतापादकं कर्म, शुभं अशुभं च। ये लौकिकं वैदिकं च कर्म अनुतिष्ठन्ति, अध्यात्मविकासे हेतुभूतं उपायजातं नानुतिष्ठन्ति, ते क्रमेण अधोगतिं प्राप्नुवन्ति। ज्ञानिनः अविद्यायाः फलं अन्यत् इति निजगदुः। विद्यायाः फलं विशिष्टमिति विचचक्षिरे। परम्परागतं इममर्थं वयमनुशुश्रुमः। अतः यः साधकः विद्यां अविद्यां च सुविशदं वेत्ति, ततः यथासमयं औचित्येन उपाययुगलं अनुतिष्ठति स एव धीमान्। स्वप्रयत्नेन तादृक् साधकः अविद्यया जननमरणात्मकं संसारं तरति। विद्यया शाश्वतं अमृतं अश्नुते। केचन अमृतत्वप्राप्तिहेतुभूतां विद्यामेव बहु मन्वते। तां स्वस्वरूपाविर्भावहेतुभूतां सम्भूतिमाहुः पण्डिताः। जनन-मरण सुखदुःखादि हेतुभूतां अविद्यां असम्भूतिमिति निर्दिशन्ति। ये असंभूतिमेव उपासते ते अन्धं तमः प्रविशन्ति। ये पुनः सम्भूतिं विनाशं-मृत्युतरणोपायं योगाङ्गपरिकर्मितं विदुः; ते इह लोके सुखं परत्र निःश्रेयसं च विन्दन्ति।

परमं सत्यं परब्रह्मैव । तस्य साक्षात्कारः तदनुग्रहमन्तरेण न निष्पद्यते । भगवतः साक्षात्कारे प्रतिबन्धकीभूतानि कामक्रोधलोभादीनि । हे स्वयं ज्योतिः पूषन् ! त्वमस्माकं तत्त्वसाक्षात्काराय प्रतिबन्धकमपावृणु । त्वमेकः विश्वस्य नियामकः स्वयं प्रकाशः, तव रश्मीन् समूह्य यैः कल्याणतमं तव रूपं पश्येयं तथा अनुगृण्हातु । अहमेवं प्रार्थयिता अस्मि । वायुः अनिलः अथ नित्यं आत्म-तत्त्वं च आहत्य इदं शरीरं निर्वृतमास्ते । तस्मात् हे मनः त्वं पूर्वमाचरितं कर्मजातं शुभमशुभं च स्मर । हे भगवन् अग्रनयनशील ! अस्मान् शोभनेन पथा श्रेयसे नय । जानता अजानता वा मया अनुष्ठितानि एनांसि विनाशय । भवति महतीं ममतारहितां आत्मनिवेदनां विधेम । सर्वतः पूर्णमिदं परतत्वं सर्ग स्थिति संहारादि प्रकारविशेषैः अनेकतां आपन्नमपि सर्वदा परिपूर्णमेव राजते ॥

## पाठः २

ईशोपनिषदिव केनोपनिषदपि प्रथमपदसंज्ञयैव प्रसिद्धा-अस्ति । केनोप-निषदं तलवकारोपनिषदिति च साम्प्रदायिकाः वदन्ति । इयमुपनिषज्जैमिनि ब्राह्मणस्य नवमोऽध्यायः । अत एव ब्राह्मणोपनिषदिति वक्तुं युक्तम् । अस्यां चत्वारः अध्यायाः सन्ति । प्रथमे शिष्यस्य विश्वेषां व्यवहारमधिकृत्य प्रश्नाः । द्वितीये सर्वेषां व्यापाराणां परमात्मायत्ततायाः निरूपणम् । तृतीये आख्यायिका, देवानां गर्वशान्त्यै निरूपिता । चतुर्थे शमदमादिभिः सहकृतानां अध्यात्म-विकासे कारणत्वं च विशदीकृतम् ।

गुरुकुले छात्रः सतीर्थ्यैः सह कालं विद्यार्जनेन यापयति । जीवनानु-बन्धिनः विषयान् प्रयोगेण अनुभवेन च जानाति । बुद्धिबोध्यानेव विषयान्

गुरूणामुपदेशेन सब्रह्मचारिभिःसह विमर्शनेन च श्रुणोति अधिगच्छति अधीते च। अन्ते एतत् सर्वं यैः उपकरणैः इन्द्रियादिभिः उपपन्नं, तानि अधिकृत्य जिज्ञासते। मनसा मनुते, प्राणेन प्रयुक्तः कर्म करोति, प्रेरितः वाचा वदति चक्षुषा पश्यति, श्रोत्रेण श्रुणोति, प्रसिद्धोऽयं अनुभवः। परन्तु कैः प्रेषितानि एतानीन्द्रियाणि स्वनियतानि कर्माणि निर्वर्तयन्ति ? इति आचार्यं पृच्छति शिष्यः। शिष्यस्य जिज्ञासाशान्त्यै तत्वमुपदिशन् आचार्यः उत्तरं विशदयति।

श्रोत्रं, मनः, वाक्, प्राणः, चक्षुश्च उपकरणानि। एतेषां सर्वेषां प्रेरणा-शक्तिः समाना अनन्ता, काचन शक्तिरस्ति। तां द्रष्टुं, श्रोतुं, मन्तुं, विज्ञातुं, च एभिः इन्द्रियैः न शक्यते। तत् परब्रह्मवस्तु। तत एव विदितात् अर्थात्, अविदितात् विषयाच्च विलक्षणं वर्तते। एवं उपदेशपरंपरया वयं अनुशुश्रुम। चक्षुरादिभिः न ज्ञायते तेषां प्रेरकः वर्तते। यत् चक्षुरादिभिः इदं विश्वं ज्ञायते तदिदं न परब्रह्मणः तात्त्विकं परिपूर्णस्वरूपं, तेन प्रेरितानि इमानि प्राणादीनि स्वनियतकर्माणि निर्वहन्ति। त्वं तदेव ब्रह्मविद्धि। तदेव उपास्व।

यदि त्वं इन्द्रियादिभिः ज्ञायमानं तत्वं इति वेत्थ तत् दभ्रमेव, अल्पमेव। अयं च ब्रह्मणः अल्पोंऽशः, न तु परिपूर्णस्वरूपं भवति। अथ यदि त्वया आत्म-तत्वं मीमांस्यते तदा भवतः संशयादेव परिदृश्यमानपदार्थज्ञानेषु ब्रह्मज्ञानं प्रपन्न मेव। तथापि अहं तत्वं साकल्येन वेद्मि इति वक्तुं न शक्यते। सर्वात्मना न जानामीति च वक्तुं असंगतम्। तस्मात् किं फलितम् ? अहं साकल्येन वेद्मीति यः विश्वसिति स न जानाति ब्रह्मतत्वम्। अंशतः जानामीति यः अधि-गच्छति सः जानात्येव। एवं इयं समस्या—तत्वज्ञानं विजानतां अविज्ञातं, अविजानतां विज्ञातमिति सूक्ष्मः पन्थाः।

स्वोपज्ञयावृत्या बुद्धिबोध्यं तत् परवस्तु इति निश्चितम्। इदमेव प्राज्ञः ‘प्रतिबोध’ विदितमित्याहुः। [illegible] [illegible] तेन

वीर्यवान् भवति। तस्मात् निश्रेयसप्राप्तिः । सर्वमिदं एतस्मिन् जन्मन्येव वेत्तव्यम्। यद्यस्मिन् जन्मनि प्रमादयामः तर्हि महती विनष्टिः साधकस्य भवति। अत एव ये धिया रमन्ते धीराः ते भूतेषु व्याप्य तिष्ठन्तं परात्मानं प्रतिपद्यंते ते साधकाः एतस्य शरीरस्य पातानन्तरं अमृतत्वं भजन्ते।

अस्मिन्नर्थे एकां आख्यायिकां उदाहरामि। यया सुखेन गहनोऽयं आशयः चेतसि प्रतिफलेत्। पुरा सुरासुरयोः युद्धमजनि। ब्रह्मणः अनुग्रहेण देवाः अजयन्। परन्तु देवाः अस्माकमेवायं विजय इति मुमुदिरे। इदं देवाना मज्ञानं ब्रह्म विजज्ञौ। ततः तद्ब्रह्म यक्षरूपेण देवानां पुरतः प्रादुर्बभूव। प्रथमं-देवाः अग्निं कोयं यक्ष इति विज्ञानाय प्रेपयामसुः। यक्षः अग्निं अपृच्छत्। कोऽसि, किं वीर्यं त्वयि इति। यदिदं पृथिव्यां तत्सर्वं दहेयं इति प्रत्युवाच अग्निः। तृणमेकं निधाय एतद्दह इति यक्षः आज्ञापयत्। तत्तृणं सर्वजवेनापि अग्निः दग्धुं न शशाक। पराभवेन निर्विण्णः प्रति-निवृत्तोऽग्निः अहं यक्षं विज्ञातुं नाशकं इति न्यवेदयत्। अथ देवाः वायु प्राहिण्वन्। तस्यापि यक्षः तृणमेव निदधे। आदातुं वायुः अशक्तः ततः निववृत्ते। अग्निवाय्वोः पराभवं दृष्ट्वा देवाः इन्द्रं प्रेपयामासुः। सः यक्षः तिरोदधे। अनुपदमेव आकाशे मुहुः शोभमानां स्त्रियं हैमवतीं उमां अपश्यत्। तां पप्रच्छ काऽसीति?।

सा ब्रह्मेत्युवाच। देवानां विजयः ब्रह्मण एवेति विशदीचकार। ततो देवाः अहंकार-ममकारदूषितस्य ज्ञानस्य अतात्त्विकत्वं अधिजग्मुः। एव-मिन्द्रियैः अहंकारममकारदूषितैः उत्पद्यमानं ज्ञानं परिमितं वर्तते। ब्रह्म-विषयकं ज्ञानं सदा नविद्योतते। विद्युत् स्फुरणमिव कदाचिदेव द्योतते। स्फुरति च। तदेतत् प्रकारेण मनसा उपस्मरति। यः स्वोपज्ञया वृत्या परमं कल्याणतमं तद्वनं परब्रह्मणः स्वरूपं वेद, सः सर्वाणि भूतानि समदृष्टिः पश्यति।

शिष्यः उपदिष्टं अर्थं सम्यगजानन् आह। "उपनिषदं भो ब्रूहि" इति। गुरुरुवाच—ते उपनिषत् उक्ता। ब्राह्मीं वा व ते उपनिषदं अब्रूम

इति। एवं इन्द्रियज्ञानातिरिक्तं ध्यानादिभिः साध्यं ग्राह्यं ब्रह्मवस्तु। तादृशं-विद्यानिष्पत्त्यै निर्मलस्य ज्ञानस्याभिवर्धनं बाह्येन्द्रियाणां निग्रहः, सर्वेषां कर्मणामनुष्ठानं, स्वाध्यायादयश्च अङ्गानि। सत्ये निष्ठा, सर्वेषामाधारभूता अस्ति। यः एवं वेद सः सर्वाणि पापानि अपहत्य निःश्रेयसपदे प्रतितिष्ठति।

## पाठः ३

कठोपनिषत् काठकशाखायां कृष्णयजुर्वेदान्तर्गते ब्राह्मणभागे लभ्यते; किंच सामवेदे, अथर्ववेदे, ऋग्वेदे च नचिकेतसः कथा तत्र तत्र अंशतः दृष्टि-पथमधिगच्छतीति विमर्शकाः निरूपयन्ति। तैत्तिरीय ब्राह्मणेऽपि इयं कथा अनूदिता वर्तते। इमां कथामालम्ब्य नाटकान्यपि लिखितानि। अस्यामुप-निषदि षड्वल्यः सन्ति। प्रथमवल्यां नचिकेतसः वरत्रयवरणम्। द्वितीये कर्मणां नित्यानित्यफलयोः विशदीकरणं अध्यात्मज्ञानंच वैशिष्ट्येन विशदीकृतं। तृतीयायां जीवात्म परमात्मनोः अस्मिन्देहे प्रतिष्ठा, देहस्य अभिवर्णनं च संपन्नम्। चतुर्थवल्यां परमात्मज्ञानं तत्साधनप्रकाराश्च विवृताः। पञ्चम्यां परमात्मनः सर्वव्यापित्वं सर्वनियन्तृत्वादिकं च व्युत्पादितम्। अन्तिमायां परिपूर्णस्य अध्यात्मज्ञानस्य स्वरूपं उपयोगाश्च व्युत्पादिताः।

गोत्रेण वाजश्रवाः आरुणिर्नाम श्रोत्रियः आसीत्। सः यष्टुमिच्छन् ईजे। तस्मिन् यज्ञे सर्वं वसु दक्षिणारूपेण ददौ। तस्य नचिकेता नाम पुत्र आस। यज्ञमागताः अर्थिनः दक्षिणाः निन्युः। कुमारः एताः दक्षिणाः दृष्ट्वा अचिन्तयत्। पिता सर्वस्वं दक्षिणासु तत्याज। आसु दक्षिणासु दुग्धदोहाः निरि-न्द्रियाः वृद्धाः, गावोपि वर्तन्ते। जग्धतृणाः खल्वेते। अचिरेण म्रियन्ते। अनुप-

योगिनीः दाने ददत् दाता अधोगतिं प्राप्नुयात्, इति चिंतयित्वा पितरं पप्रच्छ तात! कस्मै मां दास्यसीति। द्विवारं त्रिवारं एवं अनुयुक्तः पिता क्रुद्धः सन् मृत्यवे त्वां ददामीत्याह।

शान्तमनाः कुमारः अहं भविष्यति गन्तृणामपेक्षया प्रथमो भवामि। इदानीं गन्तृषु मध्यमः, अतीतेभ्यः अन्त्यः अस्मि। हे पितः! त्वं भूत भविष्यत् कालीनान् विषयान् अनुपश्य प्रतिपश्य च। मानवः सस्यमिव जायते, पच्यते, म्रियते पुनः पुनः आजायते च। इति निवेद्य यमसदनं ययौ। यमोऽपि श्रोत्रियः, धर्मकर्मवेदी, तत्त्वज्ञानी, परिपूर्णः आसीत्। दैववशात् नचिकेतसः यमसदनप्राप्तिसमये यमः गृहे नासीत्। दिनत्रय पर्यन्तं यमं प्रतीक्षमाणः नचिकेताः निराहारः तस्थौ।

ततः यमः गृहं प्रति न्यवर्तत। नचिकेतसं अपश्यत्। धर्मपरायणो यमः नचिकेतसं पप्रच्छ। अयि अतिथे! गृहस्थाः अतिथिं गृहान् प्राप्तं वैश्वानरं मन्यन्ते, तस्य शान्तिः नियमेन कर्तव्या भवति। त्वां सपर्यया अर्चयितुं इच्छामि। उदकं हर। यस्मिन् गेहे अतिथिः आगतः अनश्नन् तिष्ठेत् तस्य आशाः नश्यन्ति। प्रतीक्षा-अनुष्ठितानां कर्मणां फलं न संपत्स्यते। अनुष्ठितैः पुण्यैः लब्धव्यं फलं न विन्दते। परलोके स्वप्रयासेन निर्व्यूढानि कर्माणि न फलन्ति। परोपकाराय निर्वर्तितानि पूर्तादीनि नफलाय कल्पन्ते। किं बहुना? पुत्राः पशवश्च विनश्यन्ति। प्रमत्तस्य अल्पमेधसः गृहस्थस्य एताः विपदः संपत्स्यन्ते, त्वं तिस्रः रात्रीः मम गृहे निराशीः अवात्सीः त्वं पूजार्होऽसि नमस्योऽसि; अतः त्रीन् वरान् वृणीष्व। तानहं ददामि मे स्वस्त्यस्तु।

नचिकेताः समाहितमनस्कः यमं प्रार्थयामास। मम पिता गौतमः मम प्रार्थनया रुष्टो बभूव। अहं त्वया प्रसृष्टः यदा मम पितर मभिगच्छेयम्। यथा पूर्वं, सः मयि वात्सल्यशाली वीतमन्युश्च भूयात् एतद्वरं प्रथमं वृणे यमः प्रसन्नः सन् प्रतिवदति। औद्दालकिः आरुणिः इदानीमपि वीतमन्युरेव, त्वां दृष्ट्वापि प्रसन्नो भविष्यति।

नचिकेताः द्वितीयवराय प्रार्थयमानः आदौ स्वाभिप्रायं निवेदयति । स्वर्गलोके भयं किंचन नास्ति । तत्र जरया न बिभेति । अशनायापिपासे उभे तीर्त्वा शोकातिगः मोदते इति श्रुणोमि । हे मृत्यो ! मह्यं श्रद्दधानाय त्वं यज्ञं अध्येपि=प्रब्रूहि । इमं द्वितीयं वरं दित्सुः प्रसन्नः मृत्युः कुमार ! निबोध, इति विवृणोति - प्रजानां स्वर्गप्राप्तिसाधनं—इमं यज्ञं—गुहायां निहितं विद्धि । अयं शाश्वतीं प्रतिष्ठां प्रापयति । अयं लोकस्य आदिः भवति । अस्यानुष्ठानं वेदिनिर्माणादिविपया विभिन्नाः तान् प्रकारविशेपान् निरूपयामीति उक्त्वा न्यरूपयत् । अयं यज्ञः अनेकरूपः, तवैव नाम्ना आयत्यां लोके प्रसिद्धो भविष्यति । इमं त्रिवारं अनुतिष्ठन् यष्टा यजमानः जन्ममृत्यू तरति । ततश्च सर्वव्यापिनं परमात्मानं उपास्य अत्यन्तं शान्तिमाप्नोति । विद्वान् पुरुषः यः नाचिकेतमग्निं चिनुते सः शोकातिगः स्वर्गलोके मोदते । नचिकेतः ! येन द्वितीयेन वरेण यं यज्ञमवृणीथाः तं उपादिशम् । जनाः तवैव नाम्ना इमं अभिवदन्ति । तृतीयं वरं वृणीष्व ।

नचिकेताः तृतीयं वरं वव्रे । मनुष्ये मृते केचन वदन्ति शरीरातिरिक्तः आत्मा विद्यते इति; अन्ये नास्तीति वदन्ति । इदं रहस्यं विशदीकृत्य उपदिशतु इति प्रार्थयामास । यमः विपयस्य गहनतां सूचयन्नाह । अस्मिन् विपये देवैरपि पुरा विचिकित्सितमासीत् । अति सूक्ष्मोयं धर्मः दुर्विज्ञेयश्च । तस्मात् इमं वरं त्यज । अन्यं वरं वृणीष्व । अस्मिन् विपये मां मोपरोत्सीः ।

नचिकेताः कुतूहलेन निवेदयति । देवैरपि अत्र विचिकित्सितं किल, त्वमपि इमं दुर्विज्ञेयं आत्थ । त्वादृगन्यः अस्य वक्ता न लभ्यते अतः अन्यः कश्चित् वरः अस्य तुल्यो न भविष्यति । नचिकेतसः जिज्ञासादार्ढ्यं परीप्सुः यमः अस्य वरस्य तुल्यं अन्यं वरं वृणीष्व इति प्रालोभयत् । शतायुषः पुत्रपौत्रान्, हिरण्यं हस्तिनः अश्वान् बहून् भूमिं महदायतनं च प्रतीच्छ त्वं च यावदिच्छसि शरदः तावज्जीव । त्वां अहं अस्यां भूमौ कामानां कामभाजं

करोमि। मर्त्यलोके ये कामाः दुर्लभाः तान् सर्वान् कामान् छन्दतः प्रार्थयस्व। मनुष्यैः इमारामाः सरथाः सतूर्याः नलम्भनीयाः — आभिः परिचारयस्व। मरणविषयं वरं मानुप्राक्षीः।

नचिकेता: ब्रूते—जरा मानवमास्कन्दति। इन्द्रियाणां तेजः जरयति। मृत्युः नियमेन भविता। सर्वं जीवितं अल्पमेव। नृत्यगीते वाहाश्च अनित्या भवन्ति। वित्तेन मनुष्या न तर्पणीयाः। त्वादृशं महात्मानं दृष्ट्वा वित्तं लप्स्यामहे। यावत्त्वं ईशिष्यसि तावज्जीवामः अमृतत्वसाधनस्य उपदेष्टारं प्राप्य वर्णरति प्रमोदानभिध्यायन् अनतिदीर्घे जीविते को रमेत ? मृत्यो ! यस्मिन् देवा अपि विचिकित्सन्ति; यः गूढं अनुप्रविष्टः तस्मादन्यं वरं नचिकेता न वृणीते। स एव मे वरणीयः, देहि।

## पाठः ४

श्रेयश्च प्रेयश्च परस्परं भिन्नौ मार्गौ साधकस्य वर्तेते। उभे अपि पुरुषं सिनीतः बध्नीतः। तयोः श्रेयः आददानस्य साधु भवति। प्रेयः आददानस्य आयतिः हीयते। धीरः उभयोः गुणान् विविनक्ति। सः श्रेयः एव वृणीते। मन्दः योगक्षेमात् प्रेयः वृणीते। हे नचिकेतः त्वं प्रियरूपान् कामान् अभिध्यायन् अत्यस्राक्षीः। बहवो मनुष्याः अस्यां मज्जन्ति। वित्तमयीं सृङ्कां त्वं समालोच्य अत्यजः। भिन्नफले विद्या अविद्ये निर्दिष्टे। त्वां कामा बहवः अपि न अलोलुपन्त। अतः नचिकेतसं विद्याभीप्सिनं मन्ये। मूढाः अविद्यायां अन्तरे वर्तमानाः अन्धेनैव यथा अन्धाः नीयन्ते तथा पण्डितं मन्यमानाः परियन्ति। वित्तमोहेन प्रमाद्यन्तं बालं मूढं साम्परायः-जन्मान्तरे प्राप्तव्यविषयाः न प्रतिभान्ति। यः इमं लोकं परलोकं च न बहुमनुते सः बध्यते।

बहुभिः श्रवणैरपि यः न लभ्यः श्रुतमपि यं बहवः न विदुः, अस्य आश्चर्येण कश्चिदेव वक्ता, कश्चिदेव ज्ञाता, कश्चिदेव अनुशिष्टश्च भवति। बहुधा चिन्त्यमानः अपि अवरेण नरेण प्रोक्तः, एषः न सुविज्ञेयः धर्मः। अणीयान् अतर्क्यं, अनन्यप्रोक्ते अत्र गतिः नास्ति। एषा रुतिः तर्केण नापनेया। अन्येन प्रोक्तः सुज्ञानाय भवति। प्रेष्ठ! यां त्वमापः तव सदृशः प्रष्टा नो भूयात्। अध्रुवैः ध्रुवं न प्राप्यते। अनित्यः शेवधिः इति जानामि। अनित्यैः द्रव्यैः नाचिकेतः अग्निः चितः। तेन नित्यं प्राप्तं कामस्य आप्तिं अभयस्य पारं, क्रतोः आनन्त्यं दृष्ट्वा धीरः धृत्या अनित्यफलं कर्म अत्यस्राक्षीः। तं पुराणं दुर्दर्शं गुहाहितं अनुप्रविष्टं देवं अध्यात्मयोगाधिगमेन मत्वा धीरः हर्षशोकौ जहाति। मर्त्यः इमं अणुं धर्म्यं श्रुत्वा-आप्य मोदनीयं लब्ध्वा मोदते तस्य विवृतं सद्म मन्ये। नचिकेता आह धर्माधर्मेभ्यः अन्यत् कृताकृताच्च विलक्षणं भूताच्च भव्याच्च अन्यत् यत् तद्वद। मृत्युरुवाच। सर्वाणि तपांसि यद्वदन्ति, वेदाः सर्वे यत्पदमामनन्ति यदिच्छन्तः साधकाः ब्रह्मचर्यं चरन्ति तत् संग्रहेण वक्ष्ये "ॐ" इत्येतत्। एतदक्षरं ब्रह्म परं आलंबनं ज्ञात्वा ब्रह्मलोके महीयते। अयं विपश्चित् न बभूव। न जायते म्रियते। शरीरे हन्यमाने अजः नित्यः शाश्वतः पुराणः अयं न हन्यते। हन्ता, हन्तुं हतः हतं च यदि विश्वसिति उभौ तौ न जानीतः। कुतः? अयं न हन्ति। सः न हन्यते।

जन्तोः गुहायां आत्मा निहितः। अयं अणोरणीयान्, महतो महीयान्। भगवदनुग्रहेण वीतशोकः तं पश्यति। आसीनो व्रजति, शयानो याति। कस्तं देवं ज्ञातुमर्हति? अशरीरं शरीरेषु विद्यमानं विभुं मत्वा धीरः न शोचति। अयमात्मा प्रवचनेन न लभ्यते, मेधया न बोध्यते, बहुना श्रुतेन न ज्ञास्यते। साधकं यं सः वृणुते एषः परमात्मा तेन लभ्यते। स्वां तनुं तस्मै साधकाय विवृणुते। असमाहितः अशान्तः दुश्चरितः अशान्तमानसो वापि एनं परात्मानं नाप्नुयात्। यस्य ब्रह्म क्षत्रं च कर्म ज्ञानं च ओदनं भवति, मृत्युः उपसेचनं च। यः तं वेद, तत्र सः प्रतिष्ठितः।

# पाठः ५

अस्मिन् लोके सुकृतस्य ऋतं पिबन्ति। परमे परार्ध्ये हृदयगुहां प्रविष्टौ जीवात्म परमात्मानौ तिष्ठतः। ब्रह्मविदः पञ्चाग्नयः त्रिनाचिकेताश्च 'इमौ छाया तपौ' इति वदन्ति। यत् यष्टॄणां सेतुः अभयं तितीर्षतां पारं अस्ति; तत् परं ब्रह्म, ज्ञातुमपि शक्यमेव इममर्थं रथरूपेण निरूपयामः। आत्मा रथी। शरीरं रथः, बुद्धिः सारथिः; प्रग्रहं मनः इन्द्रियाणि हयाः विषयाः तेषु गोचराः। एवं आत्मेन्द्रियमनोयुक्तं मनीषिणः भोक्तेत्याहुः। यः सदा अयुक्तेन मनसा इमान् भेदान् न विजानीते सारथेः दुष्टाश्वा इव तस्य इन्द्रियाणि अवश्यानि भवन्ति। यः पुनः युक्तेन मनसा एतेषां स्वरूप-स्वभाव-क्रिया तत्फलादिकं-विजानाति तस्य सारथेः सदश्वा इव इन्द्रियाणि वश्यानि। एतेषां अविज्ञान-वान् अमनस्कः अशुचिश्च भूत्वा संसारमधिगच्छति। तत्पदं नाप्नोति। एतेषां विज्ञानवान् समनस्कः सदाशुचिः सः तत्पदमाप्नोति। भूयो न जायते। नरः मनः प्रग्रहेण विज्ञानसारथिना पारमाप्नोति यत् विष्णोः परमं पदम्।

इन्द्रियाणि अर्थाः मनः बुद्धिः, जीवात्मा, महत् अव्यक्तं, पुरुषः, इमे उत्तरोत्तरं परतराः वर्तन्ते। पुरुषात् न परमस्ति किञ्चित्। सा काष्ठा सा परा गतिः। एषः परमात्मा गूढः सर्वेषु भूतेषु वर्तमानोऽपि न प्रकाशते। सूक्ष्म-दर्शिभिः सूक्ष्मया अग्र्यया बुध्या गृह्यते। प्राज्ञः वाक् मनसि यच्छेत्, तच्च ज्ञाने, ज्ञानं आत्मानि तत् शान्ते आत्मनि नियच्छेत्। उत्तिष्ठत जाग्रत, प्राप्य वरान् निबोधत। कवयः तत्पथः दुर्गं वदंति। अशब्दं, अस्पर्शं, अरूपं, अव्ययं, अरसं अगन्धवत्, अनादि, अनन्तं, महतःपरं ध्रुवं यत् वर्तते तत् ध्यात्वा साक्षात्कृत्य मृत्युमुखात् प्रमुच्यते। इदं सनातनमुपाख्यानं मेधावी यः श्रुणोति वदति-ब्रह्मसंसदि श्रावयति तत् आनन्त्याय कल्पते।

स्वयंभूः इन्द्रियाणि बहिर्मुखानि व्यतृणत्। तस्मात् तानि बहिर्विषयान् पश्यंति नान्तरात्मानम्। अमृतत्वं इच्छन् कश्चित् धीरः अन्तर्मुखः प्रत्यगात्मानं

ऐक्षत। बालाः बहिर्विषयान् कामान् अनुयन्ति। ते संसारबंधं प्राप्नुवन्ति। धीराः अमृतत्वं विदित्वा इह ध्रुवेषु अध्रुवं न प्रार्थयन्ते। येन परमकारणेन रूपं रसं गन्धं शब्दान् स्पर्शविशेषांश्च अधिगच्छति स्वाप्नान् विषयान् जाग्रदवस्थायां विषयांश्च अनुपश्यति साधकः तं परमात्मानं मत्वा धीरः न शोचति। यः एनं कर्मभोक्तारं जीवात्मानं जगन्नियन्तारं ईशानं च वेदयति, ततो न विजुगुप्सते। यः तपसः पूर्वं जातः गुहां प्रविश्य तिष्ठति, यः भूतानि पश्यति, यः प्राणशक्तेः आश्रयः; अरणौ जातवेदा इव गर्भिणीभिः गर्भ इव च ध्रियते। यः ईड्यः हविष्मद्भिः अर्च्यते, येन सूर्योदयास्तमयौ भवतः देवाः सर्वे यस्मिन् अर्पिताः, यं न कोपि अतिक्रामति, इहामुत्रच समानतया प्रतिष्ठितः यः तं वेद सः अमृतत्वं प्राप्नोति। यः पुनः नानारूपं विश्वमेव पश्यति सः बध्यते। परवस्तु केवलं मनसैव आप्तव्यम्। तच्चैकं न नानास्ति। भूतभव्यस्य अस्य विश्वस्य ईशानः अंगुष्ठमात्रः मध्ये आत्मनि तिष्ठति, सः अधूमकं ज्योतिरिव भ्राजते। दुर्गे वृष्टं उदकं पर्वतेषु यथा विधावति एवं पृथग्धर्माः यथायथं अनुधावन्ति। शुद्धे जले आसिक्तं जलं यथा तादृगेव भवति एवं चिदेकरसं आत्मानं विजानतः जगतः सर्गप्रलयौ तत्वतः अधिगम्येते।

ऋजुमनसः आत्मनः पुरं एकादश द्वारं आस्ते एवं ज्ञात्वा न शोचति। शरीरपाते विमुच्यते। अयमात्मा, स्वर्गे सूर्ये, अन्तरिक्षे, यज्ञवेद्यामपि वर्तते। अग्नौ पात्रेषु अतिथौ श्रेष्ठेषु आकाशे जलजेषु, भूमिजेषु पर्वतजेषु महान् तिष्ठति। प्राणापानौ चालयति मध्ये आस्ते; विशीर्यमाणस्य अस्य देहस्य पाते किं परिशिष्यते ? अपानेन प्राणेन च मर्त्यः न जीवति। यस्मिन्नेतौ उपाश्रितौ तेन जीवन्ति। गौतम ! मरणानन्तरं आत्मनः स्थितिं प्रवक्ष्यामि। देहिनः शरीरत्वाय जङ्गमानि स्थावराणि च शरीराणि आश्रयन्ति। कामं निर्मिमाणः पुरुषः सुप्तेष्वपि जागर्ति तत् ब्रह्म। सर्वे लोकाः तस्मिन् श्रिताः। अग्निः यथा भुवनं प्रविष्टः, वायुःयथा भुवनं प्रविष्टः, रूपं रूपं प्रतिरूपो भवति। तथैव सर्वभूतान्तरात्मा अन्तर्बहिश्च रूपं रूपं प्रतिरूपो भवति। चाक्षुषैः दोषैः सूर्यो यथा न लिप्यते तथा लोकदुःखैः न लिप्यते परमात्मा। एकः एकं बहुधा-

करोति । ये इमं आत्मस्थं अनुपश्यन्ति धीराःतेषामेव शाश्वतं सुखम् । एकः चेतनः नित्यः नित्यानां चेतनानां बहूनां कामान् विदधाति । धीराः एनं आत्मस्थं पश्यन्ति । तत् परमं वस्तु एतत् इति केवलं निर्देश्यं वर्तते। भाति अथवा विभाति इति वक्तुं नशक्यते। तत्र सूर्याचन्द्रमसौ न भातः, अग्निश्च न भाति । तमेव सर्वे अनुभान्ति ।

अश्वत्थरूपकेण विश्वं रूपये । ऊर्ध्वमूलः अवाक्शाखः सनातनः एषो अश्वत्थः तस्मिन् सर्वे लोकाः स्थिताः। प्राणशक्त्या कम्पमानं जगत् तेन सृष्टम् । अग्निः सूर्यः वायुः इन्द्रादयश्च अस्य भयात् चलन्ति । अस्मिन्नेव जन्मनि सर्वं ज्ञातव्यम् । आदर्शे इव आत्मनि, स्वप्ने यथा पितृलोके, अप्सु इव गन्धर्वलोके, छायातपयोः इव ब्रह्मलोके द्रष्टव्यं भवति । अस्य रूपं नास्ति, एनं चक्षुषा न कोऽपि पश्यति । हृदा मनीषा मनसा अभिक्लृप्ताः एनं विदुः । यदा पञ्चेन्द्रियज्ञानानि मनः बुद्धिश्च न विचेष्टति तां योगमिति मन्यन्ते। वाचा वा मनसा वा चक्षुषा वा परतत्वं प्राप्तुं अशक्यम् । केवलं अस्तीति तत्वभावेन उपलब्धव्यो भवति । अनेन साधकस्य अस्य हृदिस्थिताः कामाः सर्वे प्रमुच्यन्ते । सः अत्र ब्रह्म समश्नुते, एतावदनुशासनम् । एकोत्तरशतनाड्यः हृदयात् निस्सृता वर्तन्ते । तासु एका मूर्धानं अभिनिस्सृता । तया ऊर्ध्वं आयन् अमृतत्वं एति । जीवात्मानं स्वात् शरीरात् धैर्येण प्रवृहेत् । नचिकेताः एतां विद्यां योगविधिं च कृत्स्नं श्रुत्वा विरजाः विमृत्युः अभूत् । अन्येऽपि ये इमंअनुवर्तन्ते तेऽपि एतदेव फलम् लभन्ते ।

# पाठः ६

एकादा भगवन्तं पिप्पलादं षट्शिष्याः तत्वजिज्ञासवः जग्मुः । तान् पिप्पलादः उवाच यूयं सर्वे तपसा ब्रह्मचर्येण श्रद्धया च युक्ताः संवत्सरं अस्मिन्नाश्रमे संवत्स्यथ । अनन्तरं यथेष्टं प्रश्नान् पृच्छथ तदा वः प्रश्नानां उत्तरं यदि ज्ञास्यामः सर्वं वक्ष्यामः इत्यब्रवीत् । शिष्याश्च संवत्सरं तत्रैव ऊषुः । संवत्सरान्ते प्रथमः कबन्धी कात्यायनः भगवन्तं पप्रच्छ । कुत इमाः प्रजाः प्रजायन्ते इति । भगवान् पिप्पलादः उवाच । सर्गादौ प्रजापतिः प्रजाकामो बभूव । स तपस्तेपे, तत्वयुगलं निर्ममे । रयिः प्राणश्च इति इति तदुच्यते । एकं स्थूलं अपरं सूक्ष्मम् । स्थूलमप्यनेकरूपं भवति । सूक्ष्म मप्यनेकरूपम् । यथा आदित्यः सर्वाः दिशःऽप्रकाशयति तथा सूक्ष्मा शक्तिः सर्वान् प्रेरयति प्रकाशयति च ।

बुध्यारोहाय आदित्यः वैश्वानरः चन्द्रमाः रयिः इति पदैः जगतः हेतुभूता शक्तयः निर्दिश्यन्ते । यः ब्रह्मचर्येण श्रद्धया विद्यया आत्मानमन्विष्यति सः सूक्ष्ममध्यात्मतत्वं अधिगच्छति । सः पुनः नावर्तते । तेषां विरजो ब्रह्म-लोकः येषु न माया जिह्म अनृतं च ।

तदनु द्वितीयः भार्गवो वैदर्भिःपप्रच्छ । भगवन् कत्येव देवाः प्रजां विधारयन्ते ? कतर एतत् प्रकाशयन्ते ? कः पुनरेषां वरिष्ठः ? इति । भग-वानाह वायुः अग्निः, आपः, पृथिवी, इति स्थूल शरीरनिर्माणे प्रधान तत्वानि । वाक् मनः चक्षुः श्रोत्रंच ज्ञानजनकानि उपकरणानि सन्ति । अत्र वरिष्ठः प्राणः पञ्चधा आत्मानं प्रविभज्य इदं शरीरं विधारयति । तस्मिन् उत्क्रामति सर्वे उत्क्रामन्ति । मुख्ये प्राणे प्रतिष्ठमाने सर्वे प्रतिष्ठन्ते । यथा मधुकरराजानं मक्षिका उपसर्पन्ति तथा । अराः इव रथनाभौ प्राणे सर्वं प्रतिष्ठितम् । ऋग् यजूंषि सामानि सर्वं तस्मिन् प्रतिष्ठितम् । सर्वाणीन्द्रियाणि प्राणमेवं प्रार्थयन्ते । मातेव पुत्रान् रक्षस्व, प्रज्ञां श्रीश्च न विधेहिः ।

अनन्तरं तृतीयः कौसल्यः आश्वलायनः पप्रच्छ। कुत एष प्राणो जायते? क मायाति अस्मिन् शरीरे? आत्मानं प्रविभज्य कथं प्रतिष्ठते? केन उत्क्रमते? क बह्यव्यापारान्निर्वर्तयति? कथं अध्यात्मं इति?। पिप्पलादः आह। आत्मनः प्राणो जायते। यथा पुरुषे च्छाया एतदाततं तथा एतदाततम्। मनोकृते अस्मिन् शरीरे आयाति। एषः प्राणः इतरान् प्राणान् स्वेषु कार्येषु नियमयति एवं पञ्चप्राणानां ईशः मुख्यप्राणः। द्विसप्ततिसहस्रसंख्याकाः नाड्यः शरीरे सन्ति। तेषु व्यानश्चरति। उदानः ऊर्ध्वं गच्छति। तेन उत्क्रमिष्यन् पुण्यलोकं गच्छति। अयमुदानः सहात्मना यथा संकल्पितं लोकं नयति। एवं प्राणस्य उत्पत्तिं आयतिं स्थानं च यो वेत्ति सः अमृतमश्नुते।

अथ चतुर्थः, सौर्यायणिः गार्ग्यः पप्रच्छ। भगवन्! एतस्मिन् पुरुषे कानिस्वपन्ति? कानि जाग्रन्ति? कतर एष देवः स्वप्नान् पश्यति? कस्य एतत्सुखं भवति? कस्मिन्नु सर्वे एते संप्रतिष्ठिताः भवन्ति इति।

भगवानाह सर्वेपरे देवे मनसि एकी भवन्ति। तेन एष पुरुषः न श्रृणोति न पश्यति, न जिघ्रति, न रसयते, न स्पृशते, नाभिवदते, नादत्ते, नानन्दयते, न विसृजते, नेयायते, स्वपितीत्याचक्षते। जाग्रति एतस्मिन् शरीरे प्राणाग्नयः अत्रैष देवः स्वप्ने महिमानं अनुभवति। यद्दृष्टं दृष्ट मनुपश्यति। श्रुतं श्रुतमनुश्रृणोति। देशदिगन्तरैश्च प्रत्यनुभूतं पुनः पुनः प्रत्यनुभवति। दृष्टं च अदृष्टं च श्रुतं च अश्रुतं च अनुभूतं च अननुभूतं च सच्चासच्च सर्वं पश्यति सर्वः पश्यति। यदा स्वप्नान् न पश्यति अथ एतस्मिन् शरीरे एतत्सुखं भवति। यथा वयांसि वासो वृक्षं संप्रतिष्ठन्ते एवं ह वै तत्सर्वं परे आत्मनि संप्रतिष्ठन्ते। सः परे अक्षरे आत्मनि संप्रतिष्ठन्ते।

अथ पञ्चमः शैब्यः सत्यकामः पृच्छति। भगवन्। प्रायणान्तं ॐकारं अभिध्यायन् कतमं लोकं जयतीति। पिप्पलाद आह यः एकमात्रेण अभिध्यायीत सः मनुष्यलोके तपसा ब्रह्मचर्येण श्रद्धया संपन्नः महिमानमनुभवति।

द्विमात्रेण सोमलोके विभूतिमनुभूय पुनरावर्तते। त्रिमात्रेण ॐ इत्येतेनैव अक्षरेण परं पुरुषं यद्यभिध्यायीत सः पाप्मना विनिर्मुक्तः परात्परं पुरिशयं पुरुषं ईक्षते।

अन्ततः षष्ठः सुकेशः भारद्वाजः पप्रच्छ। 'षोडशकलं पुरुषं वेदितुमिच्छामि'। भगवानाहः—इहैव अन्तः शरीरे सौम्य! पुरुषः कलायुतः अस्ति। प्राणः, श्रद्धा, खं, वायुः, ज्योतिः, आपः पृथिवी, इन्द्रियाणि, मनः, अन्नं, वीर्यं, तपः, मन्त्राः, कर्म, लोकाः, लोकेषु नाम एता षोडश कलाः, पुरुषे एताः प्रतिष्ठिताः। भगवत उत्तरैः संतृप्ताः शिष्याः पिप्पलादं आनर्चुः। त्वं हि नः पिता यः अस्माकं परं पारं तारयसि। नमः परमर्षिभ्यः।

## पाठः ७

इयमुपनिषत् अथर्ववेदमन्वेति। अस्यां ६० संख्याकाः मन्त्राः वर्तन्ते। एते त्रिष्वध्यायेषु विभक्ताः। प्रत्यध्यायं खण्डयुगलं विभक्तमास्ते। केचन "मुण्डकः" इति शब्दस्य मुण्डितं-शिरः इति अर्थं वर्णयन्ति। अयं संस्कार विशेषस्स्यात्। प्रथमाध्याये कर्मणां फलस्वरूपं अध्यात्मज्ञानस्य आवश्यकता उपवर्णिता द्वितीये परमात्मनः सर्वकारणत्वम्। तृतीये ध्यानप्रकारः जीवात्म-परमात्मनोः स्वरूपस्वभावौ च व्युत्पादिताः।

विश्वस्य कर्ता भुवनस्य गोप्ता ब्रह्मा प्रथमं सम्बभूव। अयं सर्वेषामपि देवानां पूर्वस्मिन्नेव काले आसीत्। सः सर्वविद्याप्रतिष्ठां ब्रह्मविद्यां अथर्वाय ज्येष्ठपुत्राय प्राह। ततः परंपरया प्रकाशितेयं विद्या। कदाचित् विधिवदुपसन्नः शौनकः महाशालः आंगिरसं पप्रच्छ। कस्मिन्नु भगवो विज्ञाते इदं सर्वं विज्ञातं

भवति ? अंगिरा: उवाच । वेदविद: द्वे विद्ये वेदितव्ये इति वदंति, एका परा, अपरा अपरा । चत्वारो वेदा:; शिक्षा, कल्प:, व्याकरणं, निरुक्तं, छन्द:, ज्योतिषं, इत्यपरा विद्याविभाग: – लोकानां बुद्धिविकासाय प्रवर्तते । यथा अद्रेश्यं–अदृश्यं अशाणिपादं, अव्ययं भूतयोनिं धीरा: परिपश्यन्ति तां परां आचक्षते । ऊर्णनाभि: जालं यथा सृजते गृण्हते, ओषधय: यथा पृथिव्यां जायन्ते नश्यन्ति, केशलोमानि पुरुषात् उत्पद्यन्ते विलीयन्ते-एवं विश्वं अक्षरात् पुरुषात् संभवति । यस्य तप: ज्ञानमयं तत् ब्रह्म तेन नामरूपं अन्नं च जायते।

ऋषय: त्रेतायां बहुधा सन्ततानि यानि कर्माणि अपश्यन् तत्सत्यम्। सत्यकामा: ! नियतं तानि आचरथ । एष: व: पन्था: सुकृतस्य लोके । सम्यग् हुतं हवि: होतारं सद्गतिं प्रापयति । तथापि एते यज्ञा: प्लवा इव अदृढा: । एतेषां फलं नियमितं अनित्यं च ये मूढा: एतत् श्रेय: इति श्रद्धते – ते जरा-मृत्युं पुन: पुन: अपियन्ति। पंण्डितं मन्यमाना: अन्धेनैव नीयमाना: अन्धा इव जङ्घन्यमाना पुन: पुन: क्लिश्नन्त: परियन्ति । वाला बहुधा अज्ञानेन वयं कृतार्था: इति अभिमन्यन्ते । रागात् कर्मिण: तत्वं न प्रवेदयन्ति । तेन आतुरा: क्षीणलोका: च्यवन्ते । परलोके हिताय यज्ञा:, विहिता: । परोपकारा-य तटाकनिर्माणविद्यालयादिनिर्माणं च खातादि वर्तते । मूढा एतदपेक्षया अन्यत् श्रेय: न विन्दन्ति । एतानि कर्माणि निर्वहन् पुण्येन स्वर्गं वा हीनतरं वा लोकं प्राप्नुवन्ति ।

शान्ता विद्वांस: भैक्षाचर्यं चरन्त: अरण्ये वा चरन्त: तप: श्रद्धे उपासते । ते विरजस: भविष्यन्ति । ते अव्ययं परमात्मानं विन्दन्ति । कर्म चितान् लोकान् परीक्ष्य ब्राह्मण: निर्वेदमायात् । अनित्यै: कर्मभि: नित्यपदप्राप्तिर्नास्ति । तस्मात् तत्वज्ञानार्थी गुरुं अभिगच्छेत् । प्रशान्तचित्ताय तस्मै विद्वान् सत्यं अक्षरं पुरुषं उपदिशेत् ।

सर्वे भावा: अक्षरादुत्पद्यन्ते । तमेवापियन्ति । सूर्यचन्द्राग्न्यादय: वाय्वादयो देवा:, मन:, इन्द्रियाणि, वा खं, वायु: आप: पृथिव्यादय: भूतानि

ततो जायन्ते अपियन्ति च । तेनैव स्त्रीपुंयोगजं विश्वं लोकानां यात्रा च प्रभवति। श्रद्धा, सत्यं ब्रह्मचर्यं तपश्च अंगानि। येन नद्यः स्यन्दन्ते, सर्वरूपाः औषधयः रसाश्च प्रवर्तन्ते येनैष भूतैः तिष्ठते सः अन्तरात्मा । इदं विश्वं कर्म तपः ब्रह्म च परामृतम् । यः निहितं गुहायां इदं वेद सः अविद्याग्रन्थिं विकिरति ।

गुहाशयं आविः सन्निहितं नाम । अत्र एतत् महत् पदं समर्पितम् । तदेव एजत् , प्राणत्, निमिषत् एतज्जानथ सदसद्वरेण्यं-यत् विज्ञानात् वरिष्ठम्। प्रणवंधनुः अस्मिन् कर्मणि गृह्णीयात् । उपनिषदं शरं उपासानिशितं संदधीत । तद्भावगतेन चेतसा आयम्य लक्ष्यं वेद्धव्यम् । अस्मिन् सर्वमिदं प्रोतं तमेवैकं जानथ आत्मानम् । अन्या वाचो विमुञ्चथ । एषो अमृतस्य सेतुः । यत्र नाड्यः रथनाभौ अराविव संहताः तदन्तरे बहुधा जायमानः एषः चरति । एवं 'ॐ' इत्येव ध्यायथ तमसः पाराय-स्वस्ति वो अस्तु । मनोमयः प्राणशरीरनेता अन्तः प्रतिष्ठितः, इमं हृदये सन्निधाय विज्ञानेन परिपश्यन्ति । सर्वसंशयाः अनेन छिद्यन्ते । तस्मिन् दृष्टे परावरे कर्माणि क्षीयन्ते । अयं ज्योतिषां ज्योतिः । अन्तर्बहिश्च सर्वत्र व्याप्तमिदं तत्वम् ।

द्वौ पक्षिणौ सखायौ वृक्षं समानं परिषस्वजाते । तयोरेकः जीवात्मा कर्मफलं अत्ति । अन्यः परमात्मा अनश्नन् प्रकाशते । जीवात्मा कर्मभिः मुह्यमानः शोचति यदा स्वात्मानं परमात्मना जुष्टं पश्यति तदा वीतशोको भवति । ततः पुण्यपापे विधूय निरंजनः परमं साम्यमुपैति । एवं तत्वं विदन् अतिवादी न भवति । ब्रह्मविदां वरिष्ठः आत्मक्रीडः आत्मरतिरपि क्रियावान् भवति । सम्यग्ज्ञानेन च एष आत्मा लभ्यः । क्षीणदोषाः अन्तःशरीरे ज्योतिर्मयं पश्यन्ति । सत्यमेव जयते नानृतम्। पन्थानं देवयानं सत्येन विन्दध्वम् । तत् अचिन्त्यरूपं बृहत् वर्तते । सूक्ष्माच सूक्ष्मतरं विभाति । दूरात् सुदूरे तत् । अन्तिके पश्यत्सु इहैव गुहायां निहितं अयं पुनः चक्षुषा वाचा कर्मणा तपसा



अन्यैः देवैर्वा न गृह्यते । ज्ञानप्रसादेन विशुद्धसत्वः निष्कलं ध्यायमानै

दृश्यते। विशुद्धसत्त्वः यान् कामान् कामयते तान् कामान् विन्दते। तस्मात् भूतिकामः आत्मज्ञं अर्चयेत्।

कामान् कामयमानः तत्र तत्र जायेत। पर्याप्तकामस्य कामाः सर्वे इहैव प्रविलीयन्ते। एषः आत्मा यं वृणुते तस्य स्वां तनुं विवृणुते; बलहीनेन अयमात्मा न लभ्यः। प्रमादाच्च न लभ्यते। यः उपायैर्यतते विद्वान् तस्यैष आत्मा विशते तद्ब्रह्मधाम। ऋषयः ज्ञानतृप्ताः एनमात्मानं संप्राप्य कृतात्मानः वीतरागाः बभूवुः। शुद्धसत्त्वाः सन्न्यासयोगात् वेदान्तविज्ञानेन च निश्चितार्थाः परान्तकाले परामृतान् परिमुच्यन्ति। ते सर्वे परे अव्यये देवे एकीभवन्ति। नद्यः समुद्रमिव परात्परं दिव्यं उपयान्ति। यः परमं ब्रह्म वेद सःब्रह्मैव भवति। अस्य कुलेऽपि अब्रह्मवित् न भवति। पाप्मानं तरति। विमुक्तः अमृतो भवति। श्रोत्रियाः ब्रह्मनिष्ठाः यैः शिरोव्रतं चीर्णं तेषामेव एतां ब्रह्मविद्यां वदेत। तदेतत्सत्यम्। पुरा ऋषिः अङ्गिराः एवं शिष्यमुवाच। नमः परमर्षिभ्यः।

## पाठः ८

इयमुपनिषत् भगवतो माण्डूक्यमुनेः मुखोद्गीर्णाऽस्ति। अथर्ववेदीया च। अस्यां द्वादश मन्त्राः सन्ति। संक्षिप्ताऽपि अशेषं ज्ञानविषयं विशदयति। जाग्रत्-स्वप्न-सुषुप्ति-तुरीयावस्थाः वर्णयन्ती मानवज्ञानस्य परमावधिं अभिधत्ते।

मानवस्य अनुभवमतिरिच्य कोप्युपदेशः न समुल्लसति। ब्रह्म विषयकज्ञानं वा न विभाव्यते। आन्तरः अध्यात्मज्ञानविकासो वा न प्रादुर्भवति।

अतः अनुभवसीमां अनुल्लंघ्यैव सर्वे उपदेशाः विज्ञानानि ज्ञानानि च अभि-भतानि आद्दतानि साधकैः अनुभूतानि च । ज्ञानेन्द्रियैः कर्मेन्द्रियैश्च कर्माणि निर्वहामः । अनुभवेन इन्द्रियाणां विषयाः तत्तदिन्द्रियैः गृह्यन्ते । नियतविषय ग्राहकाणि इन्द्रियाणि; विषयाणां सम्बन्धे सत्यपि एतेषां सर्वेषां सहकारि-मनः आवश्यकं अनुल्लंघनीयं च वर्तते । विषयाः इन्द्रियाणि मनश्च सम्भूय ज्ञानजनने प्रभवन्ति । तदा चिच्छक्तिरूपः आत्मा ज्ञानरूपेण सुखं वा दुःखं वा अनुभवति । यस्यां अवस्थायां आत्मनः मनसः इन्द्रियाणां विषयस्य च संप्रयोगः भवति तां जाग्रदवस्थां आहुः पण्डिताः । परब्रह्म जीवात्माभिन्नो वा अभिन्नो वा सर्वेषु व्यापारेषु समुपस्थितमेव चकास्ति । तथा च परमात्मा जीवात्मा अतीन्द्रियं मनः ज्ञानेन्द्रियाणि विषयाश्च संभूय सर्वे व्यवहारा उप-पद्यन्ते । इदं जाग्रदवस्थायाः निरूपणं सर्वेषां अनुभवपदमारोहति । जाग्र-दवस्थायां ज्ञानानि सामान्येन विषयं पुरस्कृत्यैव प्रवर्तन्ते अनुभूयन्ते । हानोपा दानेषु प्रवर्तयन्ति च ज्ञातॄन् ।

यस्यामवस्थायां आत्मादि विषयान्तानां चतुर्णां समवायो नास्ति तां अवस्थान्तरमाहुः विचक्षणाः । यत्र वस्तुरूपेण विषयाः न सन्ति तेषां ज्ञानं उत्पद्यते लीयते च । तत्र आत्मेन्द्रिय मनसामेव समवायः ज्ञानेन्द्रियाणां विषयैः सह संप्रयोगो जाग्रदवस्थायामिव नास्ति । सुख-दुःखादि जनकत्वं ज्ञानानां स्वप्नेपि समानमेव । अतश्च स्वाप्नं ज्ञानं इन्द्रियैः स्वातन्त्र्येण वा विषयसंप्रयोगेण वा नोत्पद्यते । मनसः भावनाविशेषैः विषयाणां ज्ञानमपि जायते लीयते च । इदं स्वाप्नज्ञानं जाग्रदवस्थाज्ञानेन समानमपि स्वप्नानन्तरं विषयाणां अनुपलब्धेः हानोपादानादिषु नोपयुज्यते ।

एवं आत्मा मनः इन्द्रियाणि विषयाश्च जाग्रदवस्थायां अपेक्षितानि, स्वप्ने आत्मनः मनसः इन्द्रियाणां च समवायः इति जाग्रत् स्वप्नयोः अवस्था-विशेषयोः विवेकः । अयमनुभवः सर्वेषां निर्बाधं समुल्लसति ।

यस्यां अवस्थायां इन्द्रियजन्यज्ञानं नोदेति, नात्तमेति, ज्ञातुः का
च न विशदमुपलक्ष्यते यत्र हानोपादानोपेक्षादिषु बुद्धयः नोद्भवन्ति
ज्ञानिनः सुषुप्तिमाहुः। अत्र आत्ममनसोरेव समवायः इन्द्रियाणां विष
विषयाणां सान्निध्याभावाच्च। अतः ज्ञानेन्द्रियविषययोः संप्रयोगो नास्ति
मनसः अन्येषां इन्द्रियाणां च सम्बन्धः विच्छिन्नप्रायः वर्तते। एवं जा
स्वप्न-सुषुप्त्यवस्थासु इन्द्रियार्थसंप्रयोगः जाग्रदवस्थायां, विषयरहित
स्वप्ने, ऐन्द्रियिकज्ञानाभावः सुषुप्तौ च अनुभवपदवीमधिरोहति जन्ते
अस्मिन्नवस्थात्रयेऽपि अनुस्यूततया विद्यमाना अन्या काचिदस्ति। तां तुरी
अवस्थामादिशन्ति ज्ञानिनः।

अहं जाग्रदवस्थायां एवं अन्वभवम्। स्वप्ने तादृशं सुखं वा दुःखं
अपश्यम्। सुखमहमेतावन्तं कालमस्वाप्सं इति पण्डिताः पामराश्च वि
नन्ति। अनेन निश्चयेन अनुभवेन च मम जाग्रदवस्था, मम सुषुप्त्यव
मम स्वप्नावस्था, इति अनुस्यूततया द्योतमानस्य या स्थितिः ज्ञातुः
तुरीयावस्था। साधकाः आन्तरीयाणां अनुभवविमर्शनेन इमां तुरीयाव
मनुगच्छन्ति ज्ञानिनः। स्वस्वरूपे स्थितिः तुरीयावस्थायामेवेति अध्या
चिन्तकाः लक्षयन्ति। परिपूर्णब्रह्मानुभवेन विशदीकृतावस्थाप्रकारभेदः सा
इमाः अवस्थाः परिशीलयन् यथा स्वात्मानमुपलक्षयति तत्प्रकारान्
उपदिशति मण्डूकोनाम ऋषिः।

अत्र यथा तुरीयावस्था सर्वास्वस्थासु अन्वेति तथा अकारः सर्वेषु
सर्वेषु वर्णेषु अनुस्यूतः वर्तते। स्थानकरण प्रयत्नेषु सर्वत्र अकारः आधार
वर्तते। तस्य विशेषापेक्षा नास्ति। तस्मिन्नेव अकारे उकार मकारौ सं
ओमिति प्रणवः निष्पद्यते। शब्देन पदार्थान् विजानीमः सर्वे शब्दाः
एकीभवन्ति। अतः सर्वस्य विश्वस्य वाचकः प्रणवः। विश्वस्य वि
भूतभविष्यद्वर्तमानकालाधीनाः वर्तन्ते। त्रिकालाधीनं त्रिकालातीतं
[illegible]तं ब्रह्म च ओंकारः उपलक्षयति। कुतः? एतदेव ब्रह्म, अयमात्मा

सोयमात्मा चतुष्पात् इति अवस्था चतुष्टयं निर्दिष्टम् । अवस्थाचतुष्टयवत् विराट् स्वरूपं ब्रह्म इति मुख्योपदेशः ।

जागरितस्थानः बहिःप्रज्ञः भवति - अयं वैश्वानर इति संज्ञया उच्यते । सप्ताङ्गः स्वर्गः, सूर्यः, वायुः आकाशः, जलं, पृथिवी वैश्वानर इति निर्दिष्टोवर्तते । अनन्तरं पञ्चज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, पञ्च प्राणाः चत्वारः अन्तःकरणधर्माश्च आहत्य एकोनविंशति मुखः स्थूलभुक् इति जाग्रद्-वस्थायां स्वरूपं निरूपितमास्ते । स्वप्नस्थानः एवमेव सप्ताङ्गः, एकोन विंशति मुखः, विषयेन्द्रिययोः संप्रयोगाभावात् प्रविविक्तभुक्, तैजसः इत्यु-च्यते । एतेषु एकोनविंशति मुखेषु सप्तांगेषु सुप्तः न कञ्चन कामं कामयते । न कञ्चन स्वप्नं पश्यति । सुषुप्तस्थाने एकीभूतः आनन्दमयः आनन्दभुक् प्रज्ञान घनः चेतोमुखः प्राज्ञः इत्युच्यते । एवमवस्थात्रयेषु विश्वातीतोपि विश्वरूपः सर्वेश्वरः सर्वज्ञः अन्तर्यामी सर्वस्यास्य विश्वस्य योनिः, भूतानां प्रभवे अप्यये च भवति । जाग्रदस्थायां वैश्वानरः बहिःप्रज्ञः । स्वप्नावस्थायां तैजसः अन्तः प्रज्ञः । सुषुप्तौ प्राज्ञः एताभ्यः विलक्षणं अचिन्त्यं अव्यपदेश्यं एकात्मप्रत्यय-सारं विश्वव्यापारातीतं शान्तं, शिवं, अद्वैतं चतुर्थं मन्यन्ते सः आत्मा विज्ञेयः ।

इममर्थं सूचयितुं प्रणवस्य अकार उकार मकाराः उद्दिष्टाः । अकारः जाग्रत्स्थानं वैश्वानरं सूचयति । अत्रैव सर्वान् कामान् अनुभवति । जाग्रत् सुषुप्त्योः मध्यवर्तित्वात् उकारः द्वितीयमात्रा तैजसं उपलक्षयति । सुषुप्तस्थानः प्राज्ञः, मकारेणोच्यते । कुतः ? एवं विश्वं तस्मिन् परे ब्रह्मणि लीयते । एवं प्रणवस्य मात्रात्रयं व्याख्यातम् । एवमवस्थातिरिक्तः अमात्रः चतुर्थः अव्यवहार्यः त्रिकालातीतोऽपि ॐ कारवाच्यः आत्मा । ईदृशं आत्मानं आत्मना यो वेद सः ब्रह्म वेद ।

अत्रेदमवधेयम्-चतुष्पात् ब्रह्मेत्युक्तम् । तुरीया स्थितिः जाग्रत् स्वप्न सुषुप्तिषु वर्तत इति निश्चप्रचम् । परब्रह्म विश्वरूपी विश्वातीतं इत्युपदिष्टम् ।

मात्रात्रयं अकार उकार मकार रूपेण निर्दिश्यते । अध्यात्मचिन्त जाग्रदवस्थायां स्वप्नसुषुप्ती पश्यन्ति । स्वप्ने जाग्रत्स्वप्नौ आकलयन्ति तुरीयायां पूर्वोक्तावस्थात्रयातीत स्वस्वरूपानुसंधानम् इति विवेकः ।

---

## पाठः ९

कृष्णयजुर्वेदे तैत्तिरीय आरण्यकमिति विभागो वर्तते । तत्र सप्तम अष्ट नवम प्रपाठकाः शिक्षावल्ली, आनन्दवल्ली भृगुवल्लीति संज्ञया प्रथिताः सन्ति क्रमेण द्वादश-नव-दश अनुवाकाः वर्तन्ते । गुरुकुले अधीयानानां शिष्याणां अभिवर्णनं, जीवने अनुष्ठेयाः नियमाः, परब्रह्मोपासनाप्रकारश्च प्राधान्येन अनु दिता वर्तन्ते ।

अन्तेवासिनः विद्याभ्यासकाले सूक्ष्मं स्थूलं च विश्वं भावनया प्रपेदिरे। सूक्ष्मं तत्वं चैतन्यस्वरूपं अस्ति । तत् स्थूलरूपेण विद्योतमानं विश्वरूपा भिन्नमिव प्रतीयते । प्रकृतेःविकासमुखेन समुद्र गिरिनदी तरुगुल्म लतादि रूपेण विषयतां अश्नुते । तदेवाभिमान-देवतासंज्ञाभिः विशिष्टदेवता सूचनाभिश्च सर्वदा सूक्ष्मतत्वं देवतात्मना आमनन्ति । ताः अनेकरूपाः अनेक मुखाश्च भवन्ति । अन्तेवासी प्रार्थयते मित्रः, वरुणः, अर्यमा, इन्द्रः, बृहस्पतिश्च अस्माकं श्रेयः सुखं श्च विदधातु हे ब्रम्हन् ! वायुरूपेण त्वां प्रत्यक्षं कलयामि त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि । चिन्मात्रमपि विश्वरूपेण अभिव्यक्तं निश्चिनोमि । तथैव शुद्धचिद्रूपमपि वदिष्यामि । एतादृशः वाग्व्यवहारः मां रक्षतु । मम वक्तारं अचार्यं च रक्षतु ।

सर्वस्याभ्यसनस्य स्फुटमुच्चारणं अक्षराणां अभ्यर्हितं वर्तते। तस्य विषयः सुविशदमधिगन्तव्यो भवति। अखण्डो नादः चकास्ति। नाद एव रूपान्तरेण अभिव्यज्यमानं स्वरः इत्युच्यते। स्वरः सामान्यः। सर्वेषां वर्णानां उच्चारण-व्यवस्थायां मन्त्राः वर्णस्थं बलं भवन्ति। वर्णोच्चारणे पदसंयोगस्य वैखरी सामइत्युच्यते। अनेन व्यवहारशब्दानां पौर्वापर्यक्रमः विधीयते। अयं शिक्षायाः प्रधानोविषयः प्रथममधिगन्तव्यो भवति।

वक्ता श्रोता च अध्ययनेन यशो भाजो भूयास्ताम्। आचार्यः शिष्यश्च ब्रह्मचर्यं प्राप्नुयाताम्। अधिलोकादिषु पञ्चाधिकरणेषु विश्वं संग्रहेण जानते। ता पञ्चमहासंहिताः इत्याचक्षते। सर्वस्य पार्थिवसृष्टेः पृथिवी द्यौः आकाशः वायुश्च समवायतः सृष्टेः कारणानि भवन्ति। खगोले वर्तिष्यमाण व्यवहाराणां सर्वेषां अग्निः आपः वैद्युतश्च क्रमेण समनुथन्ति। सर्वेषां अध्ययनानां आचार्यः अन्तेवासी प्रवचनं च अंगानि भवन्ति। लौकिकसृष्टिषु माता पिता प्रजननं च परस्परं अंगभात्रं भजन्ते। वर्णोच्चारे पुनः अधराहनुः उत्तराहनुः वाक्-जिह्वाच कारणतां अश्नुवन्ति। यः एताः पञ्चमहासंहिताः वेद, यः पुनः इदं विश्वव्यापारस्य परमात्मनः प्रभुत्वमनुसंधत्ते, सः इह लोके प्रजया पशुभिः आनन्दयति। अन्नाद्येन ब्रह्मवर्चसा च सुवर्ग्येण लोकेन च संयुज्यते।

पवित्रतमानां मन्त्राणां विषयभूतः यः श्रेष्ठः सः परमात्मा, विश्वरूपः। सः स्वयंभूः इन्द्रः, परमैश्वर्यशाली राजते। सः मां मेधया स्पृणोतु। अमृतत्वप्राप्तिसाधनभूत ज्ञानवानहं भवेयम्। मम शरीरं बलवत्तरं भवतु। मम जिह्वा सरस वचन रचना कुशलिनी भूयात्। कर्णाभ्यां भूरिज्ञानं श्रुणुयाम्। लौकिकज्ञानेन तात्विकं ब्रह्म आवृतम्। मम ऐश्वर्यं वासांसि गाश्च विधेहि। अन्नपानैः सदा संपन्नो भूयासम्। अचिरेण मम श्रीः अभिवर्धतु। अध्ययनाय ब्रह्मचारिणः मामुपयान्तु। ते शमदमादिगुणवरिष्ठाः भूयासुः। लोके यशः मे भूयात्। समानेषु कीर्तिमाप्नुयाम्। अनन्तसुखे भगवति अहं पवित्रो भूयासम्। यथा आपः निम्नगाः समुद्रं यान्ति, यथा वा कालः परिवर्तते

एवं देशविदेशेभ्यः ब्रह्मचारिणः मामुपयान्तु । हे ब्रह्मन् ! त्वं प्रति वेशोऽसि। मां प्रपद्यस्व ।

विश्वरूपानुसन्धानाय ऋषिः माह।चमस्यः क्रमं विशदीचकार । "भूः" इति अयं लोकः निर्दिश्यते । "भुवः" इति अन्तरिक्षं सूच्यते। "सुवः" इत्यसौ लोकः कीर्त्यते । "महः" इति निर्मलं ज्ञानं निर्दिश्यते। एभिरेव चतसृभिः व्याहृतिभिः अग्निः वायुः चन्द्रमाश्च संज्ञया उच्यन्ते । तथैव क्रमेण ऋचः सामानि यजूंषि ब्रह्म च अनुध्यानाय विधीयन्ते। पुनः ताभिरेव प्राणः अपानः अन्नं इति च व्याख्यास्यन्ते । एवं विश्वं चतस्रोव्याहृतयः चतुर्धा षोडशप्रतीकेषु संगृह्य भावनया अनुसन्धानाय विहिताः । अत्र-सूक्ष्मशक्तिभिः उपासने स्थूलतत्वं आदातुं उपायः अभिवर्णितः ।

प्राचीनयोग्यो-नाम श्रद्धावान् शिष्यः आसीत् । तस्मै आचार्यः ध्यान-क्रमं उपदिदेश, हे सौम्य ! अस्य शरीरस्य मध्ये हृदये मांसपिण्डं स्तन इव अवलंबते । तत्र सूक्ष्मः केशान्त इव रन्ध्रो वर्तते । तत्र परमात्मा आस्ते। यः भूरादिभिः व्याहृतिभिः सन्ततं ध्यायति, सः वाक्पतिः भवेत् , चक्षुष्पतिः भवेत् , श्रोत्रपतिश्च भूयात् ज्ञानी भविष्यति । किं बहुना मानसं आनन्द-माप्नुयात् । शान्तिं समृद्धिं चास्मिन्लोके अनुभवेत् , प्राणारामो भविता एवं सति अमृतत्वं सिध्यति । हे सौम्य ! एवमुपास्व ।

ध्याने विश्वस्य द्वयी गतिः अनुसर्तव्या । अधिभूतं अध्यात्मं च । अधिभूतं स्थूलं ब्रह्मरूपं भवति । पृथिवी, अन्तरिक्षं, द्यौः, दिशः, अवान्तर-दिशः—अग्निः वायुः, आदित्यः, चन्द्रमाः, नक्षत्राणि, आपः, ओषधयः, वनस्पतयः, आकाशं, आत्मा च अधिभूतमित्युच्यते । अध्यात्मं पुनः सूक्ष्मं वर्तते। आन्तरीयविमर्शनेन अधिगन्तव्यं भवति । प्राणः, व्यानः, अपानः, उदानः, समानः,—चक्षुः, श्रोत्रं, मनः, वाक् , त्वक् , चर्म, मांसः, स्नाव, अस्थि, मज्जा, एतत्सर्वं ऋषिः विधाय अवोचत् । एषु पञ्चविध स्वरूपेषु विश्वं सर्वं भवते उपदिष्टं, इत्यब्रवीत् ।

सर्वेषु उपासनेषु प्रणवः प्राधान्यं आवहति। 'ॐ' इति परब्रह्म निर्दिश्यते। ओमित्यंगीकुर्वन्ति। सामानि गायन्ति; शस्त्राणि शंसन्ति ॐ इत्यध्वर्युः प्रतिगृह्णाति। यज्ञेषु ब्रह्मा प्रसौति। ब्रह्माणमुपासन्ते। यः विश्वं सर्वं प्रणवेनैव वेद, अनुसंधत्ते, सः तादृशानुसन्धानेन ब्रह्माणमाप्नोति।

कृतविद्यं शिष्यं गुरवः प्राज्ञः एवमनुशशासुः। अधीतं मा विस्मर। तदनु, ऋतं अनुसर। सत्यं वद तपसा अभिवर्धस्व। दमेन व्यवहारं कुरु। शमात् शान्तिमाप्नुहि। अग्नीनाराधय। अग्निहोत्रं जुहुयाः। अतिथीन् संमानय। सामयिकान् मनुष्यकलितान् विषयानधीष्व। सन्ततिं यज्ञान् पुत्रपौत्रानपि परिरक्ष। स्वाध्यायप्रवचने अनुसर। राथीतरनामा ऋषिः सत्यमेव बहुमनुते। पौरुशिष्टिः तपः अभिनन्दति। मौद्गल्यःस्वाध्यायप्रवचने एव मुख्ये, इति वदति इदमेव तपः। इदमेव सत्यम्। अस्मिन्विषये त्रिशंकुरेवमाशास्ते। अहं वृक्ष इव रेरिवा। गिरिः पृष्ठमिव शाश्वतकीर्तिमान् भवेयम्। सूर्य इव वर्चस्वी भवामि। सुवर्चसा, धनेन, अमृतत्वप्राप्तिहेतुभूतमेधया, च युक्तो भवेयम्। भूत्यै न प्रमदितव्यम्। मातृ-पितृ आचार्य अतिथिदेवो भव। अनवद्यानि कर्माणि सेवितव्यानि। गुरूणां सुचरितानि उपास्यानि। यदि कर्तव्यकर्मसु विचिकित्सा स्यात् अभिज्ञैः संशयान् अपानुदेत्। ज्ञानिभिः साकं वसेत्। अथवा तत्वज्ञानिनां मार्गमनुसरेत्। एषा उपनिषत्। एतत् अनुशासनम्। एवमुपासितव्यं, उपास्यं च।

## पाठः १०

परब्रह्मोपासनाविषये बहवः प्रकाराः गुरुकुलेषु अनुसृताः अभ्यस्ताः संप्रदायेन उपदिष्टाश्च। सत् ब्रह्मवस्तु ... सर्वसाक्षी सर्वज्ञः सर्वज्ञश्चेति बहुधा आम्रेडितम्। तथापि अनन्तपारस्य वस्तुनः आम्रेडनमावश्यकमिव।

भवतु, उपासनाय एकाग्रता आवश्यकी । तत्र धारणाविषये देशबन्धः आवश्यकः । धारणा प्रतिष्ठायां ध्यानं निष्पद्यते । अयं सामान्यनियमः ध्यानाभ्यासिनां वर्तते । यः साधकः परमे व्योम्नि गुहायां निहितं परब्रह्म वेद सः सर्वान् कामान् तेन ब्रह्मणा सह अश्नुते । किं तात्पर्यं ? परब्रह्मवस्तु हृदय-गुहायां वर्तते । तदेव सत्यं ज्ञानं अनन्तं च ब्रह्म । इयं उपासना संप्रदायेन अभ्युक्ता अस्ति । यः ब्रह्म आत्मगुहायां निहितं ध्यायति सः ब्रह्मवित् ।

न केवलं ब्रह्मणः स्वरूपेण ध्यानमात्रं विधित्सितम् । किं च विश्वमपि तेन सृष्टमिति परम्परया संबन्धं च इत्याह । एतस्मादात्मनः आकाशः ततः, वायुः अग्निः आपः, पृथिवी, तथा ओषधयः तेभ्यः अन्नं—ततः पुरुषः जीवात्मा। स्थूलमिदं विश्वम् । पक्षद्वयं सर्वस्य अधारभूतं-पुच्छरूपकेण रूपितम् ब्रह्म। पक्षिणः रूपकं आकलय्य यथा शिरसा भुञ्जते, पक्षाभ्यां चलति पुच्छं मूलं प्रतिष्ठा एवं विश्वात्मकं विश्वातीतं च ब्रह्माणं प्रणिधाय अमृतत्वं आप्नुयात् ।

प्रकृतेः स्थूलरूपं भोगाय-अन्नं इति उच्यते । अन्नाद्वाः प्रजाः प्रजायन्ते भूतानां ...... तस्मात् परमोपकरणं अन्नं अस्मादेव भवति । अन्नाद्भूतानि जायन्ते वर्धन्ते, अदन्ति, अन्ते अद्यन्ते च तस्मादन्नं भूमिः इत्युच्यते । इदं स्थूलं ऐन्द्रियिकं तत्वम् । अन्या विश्वव्यापारे प्राथमिकी शक्तिः । सापि परात् संभूता । इयं परब्रह्मणः स्वरूपान्तरमेव । पार्थिवं शरीरं प्राणशक्तिः प्रतिष्ठिता धरति । पञ्चप्राणैः विविधव्यापारान् संपादयति । आकाशं आत्म-स्थानमिव रूपयति । ततः प्राणं पुरस्कृत्य पक्षिरूपेण निरूप्य परमात्मानं ध्यायीत ।

प्राणं इन्द्रियाणि अनुयान्ति, अनुप्राणन्ति । मनुष्याः पशवश्च प्राणमेव आश्रयन्ते । सर्वेषां इयं शक्तिः आयुः । ये प्राणं ब्रम्हेत्युपासते ते सर्वायुषं आप्नुयुः । एवमन्नमयः प्रथमः, प्राणमयः द्वितीयः, ऋग्यजुः सामाः अंगानि, आदेशः आत्मा । अथर्वाङ्गिरसः पक्षिरूपकमिति सुनिष्पन्नम् । इतः सूक्ष्मतरः

मनोमयः ध्यानविषयो भवति । अस्मात् अन्यः विज्ञानमयः सूक्ष्मतमः तिष्ठति । एवं वचोभिः निर्वक्तुमशक्यम् । मनसोपि गोचरो न भवति । तत् आनन्दमयं ब्रह्म । यः विद्वान् तद्ब्रह्मस्वरूपं अन्नप्राणमनोमयाद्भिन्नं तेषु प्रतिष्ठितं वेद सः अभयं प्राप्नोति तत्रापि पक्षिरूपणं, श्रद्धा शिरः, ऋतं, सत्यं च पक्षौ, योगः आत्मा, महः पुच्छम् । एवं रूपेण अभिध्यायीत ।

ब्रह्मोपासनया निर्लिप्तः विश्वविज्ञानेन कर्माणि निर्वर्तयति । सर्वेषु कर्मानुष्ठानेषु ज्येष्ठं ब्रह्म उपासते-यः विश्वविज्ञानं ब्रह्म च वेद गच्छताकालेन अस्मात् ज्ञानात् यदि न प्रमाद्यति सः अस्मिन्नेव शरीरे स्थिते सर्वाणि पापानि जहाति । सर्वान् कामान् समश्नुते । अस्मात् विज्ञानमयात् अन्यः पंचमः आनन्दमयः ब्रह्म । स्वेन रूपेणावतिष्ठते । तत्रापि अंगैः पक्षिरूपणं वर्तते, प्रियं शिरः मोदप्रमोदौ पक्षौ, आत्मा आनन्दः ।

इदं ब्रह्मवस्तु केवलं निर्देश्यं भवति असत् इति वा सन् इति वा तेन सन्तमेनं विदुः । अथ हैत्रं अनुयोगः स्यात् परब्रह्मोपासनया सुसंस्कृतः साधकः प्रेत्य कुत्र गच्छति ? किमनु भवति ? इति । पूर्वस्मिन् काले ब्रह्म वस्तु अचिन्तयत् । अनेकरूपं विश्वं सृजामीति यदिदं किञ्चिदस्यते इदं जगत् तत्स्रष्टा तदेव अनुप्राविशत् । तदनुप्रविश्य सूक्ष्मं स्थूलं च अभवत् । तस्मात् यदिदं किञ्च वर्तते तत्सर्वं सत्यमेव इति ज्ञानिनः आचक्षते । पूर्वं अव्यक्तमासीत् इदं विश्वम् । इदानीं व्यक्तम् । परमात्मा स्वयं एतत्सर्वं अकुरुत । अयं रसः । साधकः इमं रसं लब्ध्वा आनन्दी भवति । एषः आनन्द रूपः यदि न स्यात् कः प्राण्यात् ? एषहि सर्वानानन्दयति । यः अस्मिन् परवस्तुनि अदृश्ये अनात्म्ये अनिलयने प्रतिष्ठां विन्दते सः तत्वतः अभयंगतो भवति । यदि श्रद्धायां परं अन्तरं कुरुते अथ तस्य भयं भवति । मन्वानस्य विदुषः तदेव भयम् ।

अनेन भीता इव वायुः चन्द्रः सूर्यः मृत्युश्च स्वनियतानि कर्माण्याचरन्ति । अथ एवं चिन्तयामः, ब्रह्मानन्दः कीदृक् स्यात् ? इदं लोकं बुद्धि

बोध्यं, नतु बुद्धिग्राह्यं, घटादिवत् । आनन्दस्य मीमांसा एवं निरूपिता
अधीतवेदः साधुः युवा आशिष्ठः द्रढिष्ठः बलिष्टः भवतु । सर्वा पृथवी
पूर्णा तस्य वशे यदि भवति सः एको मानुषः आनन्दः । अथ शतगु
मनुष्यगन्धर्वाणामानन्दः । अकामहतस्य श्रोत्रियस्यापि अयमेवानन्दः
पुनरयं शतगुणितः तदा देवगन्धर्वाणां भवति । पुनश्च शतगुणितः पि
ततः शतगुणितः देवानाम् । ततः शतगुणितः कर्मदेवानाम् । पुनः शतगु
देवानां, पुनः शतगुणितः इन्द्रस्य भवति । ततः शतगुणितः बृहस्पतेः,
शतगुणितः प्रजापतेः । ततः शतगुणितः ब्रह्मणः । अयमपि आनन्दः अक
हतस्य श्रोत्रियस्य अस्ति । यः अनवरतं तादृशं तद्भाव भावितः आनन्दमा
यति, शरीरपातानन्तरं एतान् अन्नप्राणमनोविज्ञानमयान् कोशानतिक्र
आन्दमयमुपसंक्रामति । एनं पापानि न दहन्ति, पश्चात्तापमपि न स्पृ
पुण्यपापे उपासकस्य न सम्भवतः । यः एवं वेद सः आनन्दस्वरूपं अधि
च्छति ।

भृगुर्नाम कुमारः आसीत् । सः पितरं वरुणं उपससार । "भगव
ब्रह्म अधीहि" इति प्रार्थयामास । पिता तमुवाचः—एकान्तेन निर्दिष्टे ब्रह्म
ज्ञायते । प्रथमतः अनुभवगोचराणि तत्वानि पश्य । अन्नं, प्राणं चक्षुः श्रो
मनः, वाचः, इत्यादीनि अकालय । यतः इमानि भूतानि जायन्ते येन जात
जीवन्ति यस्मिन् अन्ते लीयन्ते, तद्विजिज्ञासस्व तद्ब्रह्म इति ।

कुमारः भृगुः स्वधीशक्त्या भूतानि दध्यौ । प्रथमं अन्नं ब्रह्मेति व्यजा
नात् । अन्नेन किल इमानि भूतानि जायन्ते, वर्धन्ते लीयन्ते च इति
पितरमुवाच । पिता पुनः तपसा ब्रह्मोपास्व । तद्विजिज्ञासस्व इत्युवाच
सः पञ्चधा तत्वान्याकलय्य अन्नमय, प्राणमय, मनोमय, विज्ञानमयेषु,
आनन्दं ब्रह्मेति व्यजानात् । आनन्दादेव खलु इमानि भूतानि जायन्ते, वर्ध
लीयन्ते च । अयं उपासनाक्रमः 'भार्गवी वारुणी विद्या' इति लोके प्रथि
एतद्विद्याविशिष्टः पशुभिः, ब्रह्मवर्चसा महान्, प्रजया, कीर्त्या च युक्तः
भवति । इदं फलं अन्न ब्रह्मेति ध्यायिनामपि समानम् ।

अन्नं न निंद्यात्, अन्नमेव प्राणः शरीरं अन्नं अत्ति । प्राणे शरीरं प्रतिष्ठितम् । शरीरे प्राणः प्रतिष्ठितः । अन्नं न परिचक्षीत । आप एवान्नम् । ज्योतिः अन्नं पचति । अप्सु ज्योतिः प्रतिष्ठितम् । ज्योतिषि आपः प्रतिष्ठिताः । अन्नं बहु कुर्वीत । पृथिव्येव अन्नम् । आकाशः अन्नादः । पृथिव्यां आकाशः आकाशे पृथिवी च प्रतिष्ठिताः । न कञ्चन अतिथिं वसतौ प्रत्याचक्षीत । यया कया च वृत्या अस्मिन् लोके बह्वन्नं प्राप्नुयात् । अस्मादन्नं सर्वतः साधकं अभिरक्षति । यथा हस्तपादादयः शरीरस्य करणतया उपयुज्यन्ते, एवमेव विश्वे तृप्तिः बलं ज्योतिः इत्यादयः दैवशक्तयः वर्तन्ते ! तान् सर्वान् " तन्नमः " इत्युपासीत । यः एवं अन्नं ब्रह्मेति बहुमुखं विस्तृतं उपासते, अन्नप्राणमनोमयान् उपसंक्रम्य अन्ते विज्ञानमयं च उपसंक्रामति, तदा सः आत्मानं परिपूर्णं, अमृतत्वप्राप्त्यै अतिक्रान्तमध्वानं विजानाति । सोपानारोहण क्रमेण प्रथमं ब्रह्मोपासनया पुत्रपश्वादीन्, ब्रह्मवर्चः, यशआदींश्च इह लोके अनुभूय अहं " श्लोककृत् प्रथमजः " इति विजानाति । अहं अमृतार्थी अस्मि । यः मे अमृतं ददाति तं निरीक्ष्य अन्ते शाश्वतं तं प्राप्नोमि इत्यध्यवस्यति ।

## पाठः ११

सामगाने कतिपय भेदाः गातृभिः आदृताः समुल्लसन्ति । गाने पञ्चभेदास्तु हिंकारः, प्रस्तावः, उद्गीथः, प्रतिहारः तथा निधनमिति । विशिष्टानां साम्नां सप्त संज्ञाः वर्तन्ते । हिंकारः, प्रस्तावः, आदिः उद्गीथः, प्रतिहारः, उपद्रवः, निधनं इति सप्त सामानः । उद्गातृभिः गीयमानः " उद्गीथः " इति संज्ञां लभते । सर्वे सामानः प्रणवं पुरस्कृत्यैव प्रवर्तन्ते । ततश्च सामगाने सारभूतः " प्रणवः " ।

परब्रह्मवस्तु चराचररूपं इदं विश्वं धारयति, नियमयति च । केन रूपेण धरति ? कया विधया नियमयति ? इत्यस्मिन् विषये तत्वदर्शिभिः

बहुधा विच्छिन्तितम् । सः चिन्मयः परमात्मा स्वसंकल्पशक्त्या प्राणा रूपेणपरिणतः आसीत् । "प्राक् संवित् प्राणे परिणता" स प्राणः रूपैः विश्वं धरति, वर्धयति, विलीनयति च । इयं परमात्मनः शक्तिः रा

इयमुपनिषत् सामवेदीया अस्ति । सामगायकाः "छन्दोगाः" च प्रसिद्धाः वर्तन्ते । अस्यामुपानिषदि (१३०) त्रिंशदुत्तरैकशत विवृताः । व्याख्यातारः छन्दः-सामगायन्तीति छन्दोगाः, तेषां अनुया छान्दोग्याः इति वदन्ति ।

छान्दोग्ये अष्टौ अध्यायाः सन्ति । प्रथमद्वितीयाध्याययोः उद्गी विषयः प्रणव विषयश्च प्रस्तुतौ वर्तेते । केषु भावेषु उद्गीथदृष्टिः विधेया ? भावेषु प्रणवस्य इति द्वयोः प्रतिपाद्योऽर्थः प्रतिपादितः । उद्गीथ एवप्र प्रणव एवोद्गीथः इति सामान्येन निर्देशोऽस्ति । एवं उपासने सूक्ष्मता तमत्वं च विवक्षन् अष्टधा निर्देशः । पृथिवी, आपः, ओषधयः, पुरुषः, ऋक्, साम, साम्नः, उद्गीथः, रसः इति उत्तरोत्तरं सारभूततां विविनक्ति वागेव ऋक् प्राण एव साम—एतयोः मिथुनं रूपकमर्यादया परस्परं आप्यायक द्वयोः युज्यते । प्रणवस्य स्वरूपं "ॐ" इति वर्तते । अभिज्ञैः अभ्य ज्ञानं, ऐश्वर्याः आश्रवणं, आशंसनं च प्रणवं पुरस्कृत्य निर्दिश्यते । यः कर्त सुविशदं प्रतिपद्य करोति श्रद्धया उपनिषदा तदेव वीर्यवत्तरं भवती तस्य व्याख्यानं भवति ।

प्राजापत्याः देवाः असुराश्च परस्परं युयुधुः इति आख्यायिका वर्तते गहनस्य अर्थस्य सुखबोधाय कथा निरूपिता । देवाः उद्गीथं आजह्रुः । असुर प्राणं पाप्मना विविधुः । अनुक्रमेण वाचं, चक्षुः, घ्राणं श्रोत्रं, मनश्च पाप्म अविध्यन् । अत एव घ्राणेन सुरभि असुरभिच जिघ्रामः । वाचा असत्यं सत्यं च वदामः । चक्षुषा दर्शनीयं अदर्शनीयं च पश्यामः । मनसा संकल्पनी

असंकल्पनीयं च स्मरामः । ततः असुराः मुख्यं प्राणं विविधुः । तेनैव प्रतिनिवृत्तेन व्यनश्यन् । एवं तत्वं अङ्गिराः वेद । एवमन्ये ऋषयः उपासनारहस्यं विविदुः । अनन्तरं व्यानं समानं च निधिध्यासतुः । तस्मात् अप्राणन् अनपानन् न कोपि गायति, यानि अन्यानि वीर्यवन्ति कर्माणिता न्यपि न करोति । मन्ता मन्त्राः देवताश्च ध्यानकाले अभिज्ञाः प्रकृष्टाः भवन्ति । अत्रापि उकारादि अक्षरत्रयं उद्गीथे आरोप्य मनसा तं उपधावेत् । आत्मानमान्तरं उपसृत्य स्तुवीत । तदा साधकस्य कामः समृध्येत ।

प्रणवः एव उद्गीथः उद्गीथ एव प्रणवः । सर्वासु ऋक्षु सामसु, यजुषि च मत्स्यः उदके स्थितोपि यथा पश्यति मृत्युं मत्स्यग्राहिणं तथा प्रणवं पश्येत् । तेन साधकः अभयं अमृतं च अश्नुते । य एवायं मुख्यप्राणः तमुद्गीथमुपासीत । आदित्यः अग्निः, वायुः इत्यादयः सर्वे देवाः अनया दिशा अनुध्यातव्याः । नक्षत्राणि चन्द्रमाश्च उद्गीथेनोपासीत । पद्मलोचनः हिरण्मयः पुरुषः उपास्यः तेन साधकः ज्ञानं विन्दते सर्वैः पापैः प्रमुच्यते च । तथैव चक्षुरादीनां गुणेषु उद्गीथमुपासीत । उक्तप्रकारेण सर्वेषु अवयवेषु सन्धिषु, लोकान्तरेषु च इयमेव दृष्टिः विधेया ।

अत्र आख्यायिका–शिलकः, दाल्भ्यः, जैवलिः इति त्रयः उद्गीथे कुशला बभूवुः । ते कथां वदाम इति संमिलन् । तेषु दाल्भ्यः–साम्नः का गतिरिति चिन्तयितुमारेभे । साम्नः स्वरः, प्राणः, अन्नं, आपः असौ लोकः स्वर्गः इति परंपरया निश्चेतुं प्राभवत् । अनन्तरं दाल्भ्यः अस्य लोकस्य का गतिरिति चिन्तयितुमारेभे । अतिसंगो मा भूदिति मध्ये प्रतिरुन्धानः शिलकः अस्य लोकस्य गतिः आकाशः अयमेव परोवरीयान् उद्गीथस्य गम्यस्थानमिति प्रपेदे । इदमेव परमं तत्वं चरमं लक्ष्यं च उद्गीथोपासनस्य ।

अथापरा आख्यायिका कुरुषु क्षामपीडितेषु चाक्रायणः जायया सह इभ्यग्रामे मन्त्राणकः उवास । जीविकार्थं देशान्तरं गच्छन् पथिकं कुल्माषान् खादन्तं

ययाचे। स आह "एत एव वर्तन्ते" इमे उच्छिष्टाः इत्यगादीत्। एतानति-रिच्य न जीवामः अतो खादामः इति तानेव प्रगृह्य अनन्तरं स्वेच्छया जलं पातुं मनः चक्रतुः। तान् खात्वा शेषं जायायै आजहार। सा पूर्वं एव सुभिक्षा बभूव। तान् प्रतिगृह्य निदधौ। परेद्युः तान् भक्षयित्वा राज्ञा यक्ष्यमाणं यज्ञं प्रेयाय। तत्र यज्ञे प्रस्तोतारं उद्गातारं प्रतिहर्तारं च "किं भवत्सु देवता-ज्ञानमस्ति" वदथ इत्यपृच्छत्। ते नाशकन् प्रत्युत्तरयितुम्। ततः यजमानः आगत्य भगवन् भवन्तं विविदिषामीति व्यजिज्ञपत्। अतिथेः पाण्डित्यमधि-गम्य भवानेव यज्ञं प्रवर्तयतु इति प्रार्थयामास। सः चाक्रायणः तत्वं विशदी-चकार।

न केवलं मनुष्याः तिर्यञ्चोपि उपासकाः पूर्वसंस्कारेण वर्तन्ते। श्वानः कदाचित् एवं प्रणवं 'ॐ' पिबामः ॐ अदामः इति अरुदन्। अयं लोकः वायुः चन्द्रमाश्च उद्गीथेनोपास्यन्ते। एवमेवेतरान् देवानापि उद्गीथेनो-पासन्ते। यः सर्वेषु भावेषु एवं वेद उद्गीथेनोपासते सः अन्नं वेद, वेदोप-निषदं च वेद।

## पाठः १२

सामशब्दः साधु शब्दश्च पर्यायेण प्रयुज्येते। यदसाधु तदसाम इति च प्रयुज्यते। यः विद्वान् साधु कर्म आचरति तं सर्वे धर्माः उपगच्छेयुः। लोके पृथिवी, अग्निः, अन्तरिक्षं, आदित्यः, द्यौः, इति ऊर्ध्वेषु पञ्चविधं सामोपासीत, तथानुलोमेन च। तस्य सर्वे लोकाः कल्पन्ते। तथैव वृष्टौ पुरोवातः, मेघः वर्षति, विद्योतते, स्तनयति, एवं पञ्चविधं सामोपासीत। सर्वास्वप्सु मेघः

वर्ष-स्यन्दन-समुद्रेषु पञ्चविधं सामोपासीत। तस्य अप्सु मरणं न भवति। तथैव वसन्तग्रीष्म-वर्ष-शरत्-हेमन्तेषु च सः ऋतुषु आनन्दमनुभवति। पशुष्वपि अजाः, गावः, अश्वाः, अवयः, पुरुषः, एतेषु पञ्चविधं समोपासीत स पशुमान् भवति। यः एवं आन्तरीयेषु प्राण वाक् चक्षु श्रोत्रेषु पञ्चविधं सामोपासते सः लोकान् जयति। अथ सप्तविधं साम वक्ष्यमाणेषु उपासीत। यत्किंच वाचः यथैति यदेति, यदुदिति, यत् प्रतीति, यदुपैति, यन्नीति इति इमे सप्त। अन्नवान् साधकः अन्नादो भवति।

अक्षर क्रमेण सप्तविधसामोपासन प्रकारस्तु एवमस्ति। हिंकारस्त्र्यक्षरं, प्रस्तारस्त्र्यक्षरं प्रतिहार इति चतुरक्षरम् आदिरिति द्व्यक्षरम्। उद्गीथ इति त्र्यक्षरम्। उपद्रव इति चतुरक्षरं अक्षरमिति त्र्यक्षरं आहत्य द्वाविंशति अक्षराणि अनेन साधकः श्रेयः आप्नोति। मनः वाक् चक्षुः श्रोत्रं प्राणः इति गायत्रं प्राणेषु प्रोतं तद्व्रतम्। अभिमन्थति धूमः जायते ज्वलन्ति अंगारा उपशाम्यन्ति एतदग्नौ प्रोतम्। अनन्तरं उद्यन् उदितः मध्यंदिनः अपरान्हः इति एतत् बृहदादित्ये प्रोतम् अभ्राणि संप्लवन्ते, मेघो जायते वर्षति स्तनयति उद्गृह्णाति एतद्वैरूप्यम्। वर्षन्तं न निन्देत् तद्व्रतम्।

त्रयीविद्या इमे लोकाः, अग्निर्वायुरादित्याः नक्षत्राणि वयांसि मरीचयः, सर्पाः, गन्धर्वाः, पितरः, सर्वस्मिन् प्रोतम् तस्मात् सर्वमस्मीत्युपासीत। अमृतत्वं देवेभ्यः आशां मनुष्येभ्यः तृणोदकं पशुभ्यः स्वर्गं लोकं यजमानाय अन्नं आत्मने, एवमप्रमत्तः मनसा ध्यायन् स्तुवीत। सर्वेस्वरा इन्द्रस्यात्मानः सर्वेऊष्माणः प्रजापतेरात्मानः सर्वेस्वरा घोषवन्तो बलवन्तो वक्तव्याः। सर्वे ऊष्माणः अग्रस्ताः अनिरस्ता विवृताः वक्तव्याः। सर्वे स्पर्शाः लेशेन अनभिनिहिताः वक्तव्याः।

यज्ञः अध्ययनं दानमिति धर्मस्कन्धाः त्रयः, प्रथमः तप एव। द्वितीयं ब्रह्मचर्य, तृतीयः अत्यन्त आत्मानं आचार्यकुले अवसादयन् सर्व एते पुण्यलोका

भवन्ति। ब्रह्मसंस्थो अमृतत्वं एति। सर्वासां व्याहृतीनां ॐकारः सारभूतः।

तृतीयाध्याये मधुविद्या प्रस्तूयते। आदित्यः प्रधानं लक्ष्यं तस्य रश्मयः एव मधुनाड्यः। प्राञ्चः एव ऋचः। येऽस्य दक्षिणा रश्मय एव यजुर्वेदः प्रत्यञ्चो रश्मयः एव सामानि उदञ्चो रश्मयः एव इतिहासपुराणं, ये ऊर्ध्वा रश्मयः ब्रह्मैव पुष्पम्। ते एव एते रसानां रसाः वेदादिरसाः एतानि अमृतानां अमृतानि।

देवाः अग्निमुखेन उपजीवन्ति नाश्नन्ति नपिबन्ति एतदेवामृतं दृष्ट्वा तृप्यन्ति। इममुपासनाक्रमं पिता ज्येष्ठपुत्राय प्रब्रूयात् प्राणाय्या वा अन्तेवासिने। नान्यस्मै कस्मैचन। इदं सर्वं यदिदं किञ्च गायत्री, गायति त्रायते च। अस्मिन् शरीरे हृदयं अस्ति। तत्र हि इमे प्राणाः प्रतिष्ठिताः। सैषा गायत्री चतुष्पदा षड्विधा। हृदयस्य पञ्च, देवसुषयः प्राङ् सुषिः प्राणः। दक्षिणः व्यानः; प्रत्यङ् अपानः, उदङ् समानः ऊर्ध्वः उदानः, एते पञ्च ब्रह्म पुरुषाः स्वर्गस्य लोकस्य द्वारपाः। यः एतान् वेद अस्य कुले वीरो जायते, प्रतिपद्यते स्वर्गं लोकम्। अस्मिन् अन्तः पुरुषे ज्योतिरस्ति, स्पर्शेन उष्णिमानं विजानाति, कर्णावपिगृह्य नदथुरिव उपश्रुणोति। अस्मिन् लोके पुरुषः यथाक्रतुः भवति सः इतः प्रेत्य भवति। मनोमयः प्राणशरीरः भारूपः अवाकी अनादरः आत्मा अन्तर्हृदये ज्यायान् पृथिव्याः अन्तरिक्षात् एभ्यो लोकेभ्यश्च एतत् ब्रह्म इतः प्रेत्य ब्रह्म संभवितास्मि इत्युवाच शाण्डिल्यः।

पुरुषो वाव यज्ञः। यानि तस्य चतुर्विंशति वर्षाणि तत्प्रातः सवनम्। चतुर्विंशत्यक्षरा गायत्री। अतः चतुश्चत्वारिंशत् वर्षाणि माध्यंदिनं सवनम्। चतुश्चत्वारिंशदक्षरा त्रैष्टुभम्। अथ यान्यष्टाचत्वारिंशद्वर्षाणि तृतीयं सवनम्। जगती छन्दः। अयं साधकः यदशिषति, पिपासति यन्नरमते ता अस्य दीक्षाः। यदश्नाति यत्पिबति यद्रमते यदुपासते उपसदस्ति, यज्जक्षति तच्छस्त्रम्। यत्तपः दानं आर्जवं अहिंसा सत्यवचनं, अथ दक्षिणाः मरणमेवावभृतः।

## पाठः १३

मनो ब्रह्मेत्युपासीत । इदं चतुष्पात् वाक् प्राणः चक्षुरिति चतुष्पात् ब्रह्म । यः एवं वेद भाति च तपति च यशसा कीर्त्या ब्रह्मवर्चसा । एवमेव आदित्यं ब्रह्मेत्युपासीत ।

पौत्रायणः बहुपाक्यः आस । सः आवसथान् मापयाञ्चक्रे । एकस्यां रात्रौ हंसौ संलपन्तौ एनं तिरस्कृत्य सयुग्वानं रैक्वं प्रशशंसतुः । पौत्रायणः वृत्तांतं उपशुश्राव । सः क्षत्तारं अब्रवीत् कोयं रैक्वः ? इति । क्षत्ता अन्विष्यन् रैक्वं आसादयामास । अनन्तरं सः गवा षट्शतानि आदाय रैक्वमुपससाद, दुहितरं च । मां शाधीति प्रार्थयत् । संवर्गविद्यां रैक्वः उपदिदेश । वायुः प्राणः इति प्रारभ्य उपासनाविधानं विशदीचकार ।

सत्यकामः जाबालः आसीत् । अहं किं गोत्रः ? इति मातरमपृच्छत् । न जानामीति सा प्रत्यवदत् । सः गौतममेत्य ब्रह्मचर्यमुवास । अहं सत्यकाम गोत्रं न जनामि इत्युवाच । गौतमः चतुःशताःगाः निराकृत्य नासहस्त्रेणावर्तयेति प्रोवाच । ताः सहस्रं संपेदुः । आचार्यकुलं प्रापयत् । एतावतैव ब्रह्मज्ञानी संवृत्तः । ततःपरं चतुष्कलं ब्रह्माणं उपदिदेश । ब्रह्मविदेव सौम्य ! मे भासि, कोनु खलु ते उपदिदेश । सत्यकाम आचार्याद्देव विद्या विदिता, साधिष्ठं प्राप ।

कामलायनः सत्यकामे ब्रह्मचर्यमुवास । सः द्वादश वर्षाणि अग्नीन् परिचचार । सः नैनं समावर्तयति इतरान् समावर्तयति । तं जाया उवाच तप्तो ब्रह्मचारी कुशलमग्नीन् पर्यचारीत् । प्रब्रूह्यस्मै इति सः अप्रोच्यैव प्रवासं चकार । तदा रुग्णः ब्रह्मचारी न आश ततः अग्नयः अस्मै तत्वं उपदिदिशुः । ब्रह्मविदेव ते मुखं भाति । कोनु उपदिदेश ब्रवीतुभवान् इत्यवदत् । अ एषो

अक्षिणि पुरुषो दृश्यते। एतदात्मा एतदभयं इत्यग्नयः उपादिशन् य एवं
सः मानवमावर्तं नावर्तते।

प्राण एव ज्येष्ठः श्रेष्ठश्च। अत्र वाक् वरिष्ठः चक्षुः श्रोत्रं च अहंश्रे
स्मीति; अहं श्रेयसे विवदमानाः एवं प्राणाः आसन्। ते प्रज
एत्योचुः कोनः श्रेष्ठः? इति। यस्मिन् उत्क्रान्ते पापिष्ठतरमिव दृश्यते स
श्रेष्ठ इत्याह। पर्यायेण वाक् चक्षुः श्रोत्रं मनश्च उच्चक्रमुः। संवत्सरं प्रोष्य
ऊचुः। कथमशकत मदृते जीवितुमिति ऊचः। वयं सर्वे केवलं तत्त
यांणि विहाय अजीवाम इति आहुः। ततः मुख्यप्राणः उच्चिक्रमिषत्। इ
प्राणान्समखिदत्। तदावागादयः प्राणं अस्तुवन्। प्राणेह्येवेतानि सं
भवंति। अथ किमन्नं प्राणस्य? यत्किंचिदिदं आश्वभ्यः आशकुनिभ्यः।
वासः ?आप एव वासः अस्मिन्नर्थे इयं अख्यायिका।

आरुणेयः श्वेतकेतुः पांचालानां समितिमेयाय तं जैवालिः प्रवाह
उवाच। वेत्थ कुमार! यदितो अधिप्रजाः प्रयांति, यथा पुनरावर्त
देवयानस्य पितृयानस्य च पथः व्यावर्तना यथासौलोकः न संपूर्यते
पंचम्यामाहुतौ आपः पुरुषवचसो भवन्तीति अनूक्त्वाशिषम्। इमान् प्रश्
राजन्य बन्धुः अप्राक्षीत्। तानेव ब्रूहीत्यपृच्छम्। अनन्तरं उत्तरानभिद
गौतम! असौलोकः अग्निः। अस्मिन्नग्नौ देवाः श्रध्दां जुह्वति। पर्ज
अग्निः। पृथिवी अग्निः। पुरुषो वा अग्निः। योषावा अग्निः।
पंचम्यामाहुतावापः पुरुषवचसो भवन्ति। सः उल्बावृतः नव वा दशमा
शयित्वा गर्भात् जायते। न जातः यावदायुषं जीवति तं प्रेतं दिष्टं इतो
एव हरन्ति। तत् ये इत्थं विदुः ये च इमे अरण्ये श्रद्धातपः इत्युपासते
देवयानेन पथा यन्ति। तत्पुरुषो अमानवः एतान् ब्रह्म गमयति। अथ
इष्टापूर्ते दत्तं इत्युपासते ते धूममार्गेण गच्छन्ति। ते पुनरावर्तन्ते आकाशवा
धूम अभ्र मेघ वर्ष ओषधि वनस्पतिः अनन्तरं अन्नं, रेतः ततः जननम्
रमणीय चरणाः रमणीयां योनिं आपद्येरन्। कपूयचरणाः कपूयां यो
आपद्येरन्। तेनासौ लोको न संपूर्यते। य एवं वेद।

औपमन्यवः प्राचीन शालः इत्यादयः महाश्रोत्रियाः समेत्य कोनु आत्मा किं ब्रह्म इति मीमांसां चक्रुः ? । सर्वेमिलित्वा उद्दालकं अभ्याजग्मुः । सः कैकेयं अभिगच्छाम इति तैः सह जगाम । ते प्रार्थयामासुः वैश्वानरं अध्येषि नो बूहि इत्यप्रार्थयन् । स आह औपमन्यव भगवन् प्रचीनयोग्य, वैय्याघ्रपाद, शार्कराक्ष्य, बुडिल, आरुणे ! यूयं कां देवतां उपासितुमिच्छथ ? इति पप्रच्छ ते क्रमेण दिवं, अदित्यं, वायुं, आकाशं, आपः, पृथवीं उपास्महे इत्यवोचन् । अथ गोतम आह एतस्य मूर्धा मनः वैश्वानरस्य चक्षुः, विश्वरूपः प्राणः पृथग् वर्त्मा संदेहो बहुलः बस्तिरेव रयिः, पृथिवीपादौ, उर एव वेदिः, लोमानि बर्हिः, हृदयं गार्हपत्यं, मनः अन्वाहार्यपचनं, तस्मात् प्राणायस्वाहेति भुक्तेन प्राणः तृप्यति । ततः चक्षुः द्यौः आदित्यादयश्च क्रमशः तृप्यन्ते । एवमपानः व्यानः, उदानसमानौ च तृप्यन्ति । एवं समग्रेण विद्यानुष्ठानेन यथा ईषिकातूलमग्नौ प्रोतं प्रदूयेत एवं अस्य सर्वे पाप्मानः प्रदूयन्ते ।

आरुणेयः श्वेतकेतुः आस । तं पितोवाच । अस्मात्कुलीनः न कोपि अननूच्य ब्रह्मबन्धुः भवति । गुरुकुले वस, ब्रह्मचर्यं चर इत्याह । सः द्वादश वर्षः उपेत्य चतुर्विंशतिवर्षः सर्वान् वेदान् अधीत्य अनूचानमानी एयाय । स्तब्धं श्वेतकेतुं पिता अप्राक्षीत्, कुमार ! एन अश्रुतं श्रुतं भवति, अमतं मतं; अविज्ञातं विज्ञातं उत तमादेशमप्राक्ष्यः ? कुमार आह; कथंनु भगवः सः आदेशः भवति ? पिता विशदयति । यथा एकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातंस्यात्, एकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्यात् एवं सः आदेशः । वाचारम्भणं विकारो नामधेयं भवति। कुमार आह;— भगवन्त एव एतन्नावेदिषुः । यद्यवेदिष्यन् कथं मे नावक्ष्यन् ? भगवानेव मे ब्रवीतु । पितोवाच,— सौम्य अग्रे इदं एकं अद्वितीयं एव आसीत् । इदं सदित्येके, असदित्येके आमनन्ति । कथं असतः सज्जायेत ? तत् बहुस्यां प्रजायेय इत्यैक्षत । तत्तेजोऽसृजत, आपः असृजत, अन्नं भूमिं असृजत । एभ्यो भूतेभ्यः अण्डजं उद्भिजं स्वेदजं च त्रीणि-बीजानि जातानि । सेयं देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकर,

वाणीति ऐक्षत । तासां त्रिवृतं त्रिवृतमेकैकामकरोत् । जीवेनात्मनानु[illegible] नामरूपे व्याकरोत् ।

अन्नमशितं त्रेधा विधीयते । यः स्थविष्ठो धातुः तत्पुरीषं भव[illegible] मध्यमः तन्मासं, अणिष्ठः मनः, आपः पीताः त्रेधा विधीयन्ते । स्थ[illegible] मूत्रं, मध्यमः लोहितं, अणिष्ठः प्राणः, तेजः अशितं त्रेधा विधीयते । स्थ[illegible] धातुः तदस्थि- मध्यमः मज्जा, अणिष्ठः सा वाक् । अन्नमयं मनः, आप[illegible] प्राणः तेजोमयी वाक् इति विजानीहि । यथा दध्ना सर्पिः अन्नस्य अ[illegible] तथा मनः भवति । एवमेवापां तेजसश्च ।

सौम्य ! पञ्चदशाहानि माशीः । कामं आपः पिब । आपोमयः प्रा[illegible] पिबतः विच्छेत्स्यते । षोडश कलः पुरुषः पञ्चदशाहनि न आश । [illegible] तमद्दिने उपससाद । किं ब्रवीमि भो इत्याह ऋचः यजूंषि इत्यनुयुक्तः [illegible] प्रतिभान्ति भो इत्युवाच षोडशकलानां सौम्य एका कला अतिशिष्टा । त[illegible] वेदाननुस्मरसि । अशान अथ विज्ञास्यसि । सः आश अथ प्रतिपेदे ।

श्वेतकेतुं पुत्रं आरुणिः उवाच । स्वप्नान्तं विजानीहि पुरुषः तदा [illegible] संपन्नो भवति; स्वं अपीतो भवति यथा शकुनिः सूत्रेण प्रबद्धः दिशं [illegible] पतित्वा बन्धनमेवोपाश्रयते । एवं मनः दिशं दिशंप तित्वा प्राणमेवाश्रय[illegible] एवमन्नेनापः तत तेजः तेजसा सन्मूलमन्विच्छ । इमाः सर्वाः प्रजाः [illegible] यतनाः सन्मूलाः सत्प्रतिष्ठिताश्च । एवमेव इमाः तिस्रो देवताः एवैका भ[illegible] प्रयतः पुरुषस्य वाक् मनसि । मनः प्राणे, प्राणास्तेजसि ! तेजः परस्यां देव[illegible] एकीभवति तत्सत्यम् । इदं सर्वं ऐतदात्म्यम् । एषोऽणिमा स आत्मा श्वेत[illegible] तत्वं असि । (१) यथा मधुकृतः नानात्ययानां वृक्षाणां रसान् समहारं [illegible] रसं गमयन्ति ते तत्र अमुष्य वृक्षस्य अहं रस इति विवेकं न लभन्ते एवमिमाः सर्वाः प्रजाः सति सम्पद्य भेदं नविदुः । त इह व्याघ्रो वा सिंहो पतंगो वा तदैवभवन्ति एतत्सत्यं श्वेतकेतो तत्वं असि । (२) यथासोम्य [illegible] स्यन्दन्ते समुद्रमेवापियन्ति अयमहं अस्मि इति न विदुः तत्सत्यं श्वेतकेतो [illegible]

असि । (३) महतो वृक्षस्य मूले मध्ये अग्रे च अभ्याहन्यात् जीवन् स्रवेत् एष वृक्षः जीवेनात्मना अनुप्रभूतः तिष्ठति । यद्येकां शाखां जहाति जीवः सा शुष्यति । सर्वं जहाति सर्वं शुष्यति एवं जीवापेतं म्रियते किल ? न जीवो म्रियते एतत्सत्यं श्वेतकेतो ! तत्वमसि । (४) न्यग्रोधफलमाहर, भिन्धि । किमत्र पश्यसि ? अण्व्यइव इमे धानाः आसां एकां भिन्धि । किमत्र पश्यसि ? नकिञ्चन । अणिमानं न निभालयसे एषः अणिमा एवं महान् न्यग्रोधस्तिष्ठति तत्सत्यं श्वेतकेतो तत्वमसि । (५) लवणं उदके अवधाय श्वः प्रातरुपासीदथाः अङ्ग लवणं तदाहर; विलीनमेव । अन्तादाचाम, मध्यादाचाम, कथमिति ? लवणमिति । अत्रकिल न निभालयसे । तत्सत्यं श्वेतकेतो तत्वमसि । (६) गन्धारेभ्यः अपिनद्धाक्षं पुरुषमानीय अतिजने विसृजेत् । स मेधावी ग्रामान् गच्छन् गन्धारमेवोपसंपद्येत् । एवमाचार्यवान् पुरुषो वेद, तस्य तावदेवचिरं यावन्नविमोक्ष्ये इति अथ संपत्स्ये । एषोऽणिमा श्वेतकेतो तत्वमति ।

उपतापिनं पुरुषं ज्ञातयः जानासि मां इति पर्युपासते । अस्य पुरुषस्य यावत् वाक् मनसि, मनः प्राणे, प्राणः तेजसि, तेजः परस्यां देवतायां एकीभवति अथ न जानाति तत्सत्यं श्वेतकेतो तत्वमसि । (८) पुरुषमादाय स्तेयमकार्षीत् परशुमस्मै तपतेत्यानयन्ति । स यदि तस्य कर्ता भवति अनृतेनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति । सदह्यतेऽथ हन्यते । अथ यदि तस्य न कर्ता भवति सत्यमात्मानं कुरुते परशुं तप्तं प्रतिगृण्हाति । न दह्यतेऽथ मुच्यते तत्सत्यं श्वेतकेतो तत्वमसि ।

एकदा नारदः सनत्कुमारं उपससाद । " अधीहि भगव इत्यप्रार्थयत् । " यद्वेत्थ तेन मोपसीद तत ऊर्ध्वं वक्ष्यामि इति सनत्कुमार उवाच । चतुर्दश विद्याः अध्येमि भगवद्भ्यः । सोऽहं मन्त्रविदेवास्मि नात्मवित् । भवादृशेभ्यः श्रुतं शोकं तरति आत्मवित् इति । सोऽहं शोचामि । मा भगवान् शोकस्य पारं तारयतु । सनत्कुमार आह । यद् अध्यैषि नाम एव एता

चतुर्दशविद्याः । अस्ति नाम्नः भूयः, वाक्, मनः संकल्पः, चित्तं, ध्यानं, विज्ञानं, बलं, अन्नं, आपः, तेजः, आकाशः, स्मरः, आशा, प्राणः, एतेषां ब्रह्मेति उपासना शक्यते । ताभिः उपसनाभिः विभिन्नानि फलानि अश्नुते। यः अतिवदति सत्येन तेन सत्यं विजिज्ञासितव्यम् । यदि विजानाति सत्यंवदति अथमनुते विजानाति । यदा वै श्रद्धधति अथमनुते । यदा निस्तिष्ठति श्रद्धधते । यदा करोति निस्तिष्ठति । यदा सुखं लभते अथ करोति यो वै भूमा तत्सुखम् । यत्र नान्यत् पश्यति; शृणोति, विजानाति, स भूमा, तदमृतं, तच्च स्वे महिम्नि प्रतिष्ठितम् । एवं विजानन् आत्मरतिः आत्मक्रीडः आत्ममिथुनः आत्मानन्दः स्वराट् भवति । सर्वेषु लोकेषु कामचारो भवति। आत्मन एव मन्त्रादीनि सर्वाणि उत्पन्नानि । सः एकधा, त्रिधा, पञ्चधा, अनेकधा भवति । तस्मै मृदितकषायाय भगवान् सनत्कुमारः तमसः पारं दर्शयति ।

अस्मिन् शरीरे दहरं पुण्डरीकं वेश्म-हृदयं वर्तते । तस्मिन् यदन्तः तद्विजिज्ञासितव्यम् । तस्मिन् सर्वं प्रतिष्ठितम् । अस्मिन् कामाः समाहिताः। एष आत्मा अपहतपाप्मा विजरः विमृत्युः विशोकः विजिघत्सः अपिपासः सत्यकामः सत्यसंकल्पः इति, अनुसंधानेन उपासीत । यद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते । यः इह आत्मानमनुविद्य विजानाति, सः सर्वेषु लोकेषु कामचारो भवति । संकल्पादेवास्य पितरः भ्रात्रादयश्च समुत्तिष्ठन्ति । गन्धमाल्ये अन्नपाने गीतवादित्रे स्त्रियः इमे सत्यकामाः तान् प्राप्नुवन्ति । एतेषां अनृतं अपिधानम् । अक्षेत्रज्ञाः हिरण्यनिधिं निहितं उपर्युपरि सञ्चरन्तः न विन्देयुः । एवं प्रजाः एतं ब्रह्मलोकं न विन्दन्ति। एषः संप्रसादः जीवः अस्मात् शरीरात् समुत्थाय परंज्योतिरुपसंपद्य स्वेन रूपेण अभिनिष्पद्यते । स्वप्ने सुषुप्तौ च नाडिषु स्वपिति ।

देवासुराः आत्मानमन्विच्छामः इति प्रजापतिमाजग्मुः । प्रजापतिरुवाच । य एषो अक्षिणि पुरुषो दृश्यते य एष स्वप्ने ... इन्द्रः असुरेभ्यः ... आत्मानमवेक्ष्य

यदात्मना विजानीथ तन्मे प्रब्रूतं इत्याह । ते प्रतिबिम्बमिवात्मानं अधिजग्मुः । असुराः तथैव जग्मुः । देवाः पुनः न वयमत्र भोग्यं पश्याम इति प्रजापतिमपृच्छन् । द्वात्रिंशद्वर्षाणि भूयः ब्रह्मचर्यं वस, व्याख्यास्यामीति गुरुः आह । ततः स्वप्ने महीयमानश्चरति एष आत्मा इति प्रपेदिरे । नाहमत्र भोग्यं पश्यामीत्याह इन्द्रः । वस पुनः द्वात्रिंशद्वर्षाणि ब्रह्मचर्यम् । इत्युक्तः उवास अनन्तरं सुप्तं आत्मानं अधिजगाम । पुनः नाहमत्र भोग्यं पश्यामीत्याह । पुनः अपराणि पंचवर्षाणि ब्रह्मचर्यमुवास अन्ते इन्द्रः अध्यात्मविकासमवाप तान्येकशतं संपेदुः तं वा एतं देवा आत्मानमुपासते । अश्व इव रोमाणि विधूय पापं, चन्द्र इव राहोर्मुखात् प्रमुच्य कृतात्मा ब्रह्मलोकमभिसंभवति । स खलु एवं वर्तयन् यावदायुषं ब्रह्मलोकं उपसंपद्यते । एवं परंपरया इदं ज्ञानं उपदिष्टम् ।

## पाठः १४

इयमुपनिषत् शतपथब्राह्मणस्य चरमो भागः । इयं माध्यंदिन शाखायां काण्व शाखायां च लभ्यते । काण्वशाखायाः १७ काण्डे, तृतीयमारभ्य नवमाध्याय पर्यन्तं माध्यंदिनशाखायां, नवममारभ्य चतुर्दशाध्याय पर्यन्तं इयमुपलभ्यते । एवं षडध्यायात्मिका इयं उपनिषत् सप्तचत्वारिंशत् ब्राह्मणसंज्ञाभिः विभक्ता अस्ति । सामान्येन उपदेशः उपपत्तिः उपासना च सुविशदं निरूपिता हृदयंगमा वर्तन्ते ।

विश्वरूपस्यानुसन्धाने उपायरूपेण बहूनि रूपकाणि समाहृतानि । तत्र अश्वमेधरूपकेण उषा वा अश्वस्य मेध्यस्य शिरः इत्यारभ्य चतुर्विंशतिपदैः अनूदितानि । एवमेव चिन्तने अग्रे इह किञ्चन नैव आसीत् । इदं सर्वं

मृत्युना आवृतमासीत् । अनन्तरं अर्कः आपः इत्यादि रूपेण सृष्टिरभूत् । ततः जीवात्मा तस्य उपकरणतया मनः, जीवने अन्नं, एवं सृष्टिक्रमः अनुसन्धानाय निरूपितः । देवाः असुराश्च एषु लोकेषु अस्पर्धन्त । देवाः ज्यायांसः, असुराः पाप्माना वाचं, प्राणं, चक्षुः, श्रोत्रं, मनश्च अविध्यन् । अन्ते देवाः प्राणमुपास्य असुरान् अहनन् । अतः देवताः पाप्मानं मृत्युं अपहृत्य अमृतत्वं प्रपेदिरे। अग्रे इदं आत्मैवासीत् । सः पुरुषविधः अनुवीक्ष्य आत्मनः अन्यं नापश्यत् । अतः अहमस्मीति व्यवहरत् । इदानीमपि सर्वे अहं अस्मीति स्वात्मानं उपलक्षयन्ति । सः अबिभ्यत् । तस्मात् एकाकी बिभेति । सोऽचिन्तयत् कस्मात् बिभेमि ? द्वितीयाद्वै भयं भवति । पुनः स नैव रेमे । तस्मात् एकाकी न रमते । सः द्वितीयमैच्छत् । ततश्च स्त्री पुमांसः असृजत् । एवं मनुष्याः अजायन्त । अनेन पथा गौः वृषभः गर्दभः गर्दभी इत्यादि रीत्या मिथुनं असृजत । अयमेकः पक्षः ।

इदं तर्हि पूर्वं अव्याकृतमासीत् । तन्नामरूपाभ्यां व्याक्रियत । असौ नामायं, इयं इदं रूपा इति अतः सर्वः व्यवहारः नामरूप-व्यवहाराभ्यामेव क्रियते । अकृत्स्नो हि सः; प्राणन् प्राणः, वदन् वाक्, पश्यन् चक्षुः, शृण्वन् श्रोत्रं, मन्वानो मनः, एतानि सर्वाणि कर्म नामान्येव । आत्मेत्येवोपासीत । अत्रहि एते सर्वे एकं भवन्ति । तदेतत् पुत्रात् वित्तात् सर्वस्मात् प्रेयः अयमात्मा ।

अग्रे ब्रह्म वा इदं आसीत् । तदात्मानमवैत् अहं ब्रह्मास्मीति । तच्छ्रेयोरूपेण, तथैव वसवः रुद्राः आदित्यादयश्च, ततः वर्णचतुष्टयम् । धारणाय धर्मं सत्यं च । अयमात्मा सर्वेषां भूतानां लोकः । अतः यज्जुहोति तेन देवानां लोकः, यदनुब्रूते तेन ऋषीणां, यत्प्रजामिच्छति तेन पितॄणां यद्ददाति अशनं तेनमानवानां एवं लोकोपदिष्टमिच्छेत् । सोऽयमात्मा अकामयत । जाया मे स्यात् अथ प्रजायेय । वित्तं मे स्यात् अथ कर्म कुर्वीय । त्रयो लोकाः सोऽयं मनुष्यलोकः पुत्रेण जय्यः, कर्मणा पितृलोकः, विद्यया देवलोकः । देवलोको वै लोकानां श्रेष्ठः तस्मात् विद्यां प्रशंसन्ति । नाम रूपं कर्मेति संक्षेपः । इममर्थं सामगानेन आमनन्ति ।

अनूचानो गार्ग्यः आस । सः अजातशत्रवे ब्रह्म ब्रुवाणीत्याह । गार्ग्यं आह क्रमशः आदित्यः चन्द्रः, विद्युत्, आकाशः वायुः आपः, आदर्शे यन्त पश्चात् शब्दः अनुदेति । दिक्षु छायामायः पुरुषः एषु ब्रह्मोपासनां उदाजहार । अजातशत्रुः एतावान्नू ? इत्यनुयुञ्जन् गार्ग्यं पाणावादाय सुप्तं पुरुषमाजग्मतुः ? तं पाणिना पेषं बोधयाञ्चकार । यत्रैष सुप्तोभूत् पुरुषः क एष तदाभवत् । कुतएतदागात् इति पप्रच्छ । तन्नमेने गार्ग्यः । एषोन्तर्हृदये आकाशे शेते । तदा प्राण–वाक्–चक्षु–श्रोत्र–मनांसि गृहीतानि भवन्ति । तथैव स्वप्ने उच्चा-वचान् पश्यति । हितानामनाड्यः द्वासप्तति सहस्राणि हृदयात् पुरीततिं अनु-प्रविश्य प्रतिष्ठन्ति । ताभिः प्रत्यवसृत्य पुरीतति शेते इयं सुषुप्तिः । यथा ऊर्णनाभिः तन्तुना उच्चरेत् एवमेवास्मादात्मनः सर्वे उच्चरन्ति तत्सत्यस्य सत्यम् ।

ब्रह्मणो रूपे द्वे । मूर्तं चामूर्तं च, सच्चत्यच्च, अमृतं मर्त्यंच । सतः एषहि रसः, वायुः अन्तरिक्षं इदं त्यत् । अथ अध्यात्मम् । यदन्तरात्मन् आकाशः । एतस्य सत एष रसः । प्राणः अन्तराकाशश्च अमृतम् ।

याज्ञवल्क्यः मैत्रेयीमाह । अस्मात् आश्रमात् उद्वास्यन् अस्मि ते अनया कात्यायन्या अन्तं करवाणि । सा मैत्रेयी उवाच । कथं वित्तेनाहं अमृतास्यां ? इति । वित्तेनामृतत्स्य तु न आशा अस्ति । यथैव उपकरण-वतां जीवितं तथा ते जीवितंस्यात् मैत्रेयी आह येनाहं नामृता स्यां किमहं तेन कुर्यां ? यदेव भगवन् वेद तदेव मे ब्रूहि । सहोवाच व्याख्यास्यामि निधिध्या-सस्व । पतिः जाया पुत्राः वित्तं, ब्रह्म, क्षत्रं लोकाः देवाः भूतानि सर्वं आत्मनस्तु कामाय प्रियं भवति । न कदापि तेषां कामाय । आत्मा वा अरे द्रष्टव्यः श्रोतव्यः मन्तव्यः निधिध्यासितव्यः, तेन सर्वं विदितं भवति । इदं ब्रह्म, इदं क्षत्रं, इमे लोका इदं सर्वं यद्यमात्मा । यथा शंखदुन्दुभिवीणानां ध्वनिभिः तानि विजा-नीमः तथा विश्वस्य मूलं जानीयात् । स्पर्शादीनां तानीन्द्रियाणि एकायनम् विज्ञानघन एव एतेभ्यो भूतेभ्यः उत्थाय तान्येवानुविनश्यति । नप्रेत्य संज्ञास्ति ।

मैत्रेयी आह, मा भगवन् अमूमुहत् । नप्रेत्य संज्ञास्तीत्याह । यत्र द्वैतं
तत्र इतरः इतरं जिघ्रति पश्यति शृणोति अभिवदति मनुते विजानाति, यत्र
अस्य सर्वं आत्मैवाभूत् तत्र केन कं पश्येत् ? विज्ञातारं केन विजानीयात् !
अध्यात्मतत्वमुपदिदेश ।

सर्वंमधुरित्युपासीत भूतानां लोकानां इतरेषाञ्च । अयमात्मा सर्वेषां
यश्चायमात्मा यस्मिन्देवाः सर्वेलोकाः समर्पिताः एवमनुशासनम् । जनकः
दक्षिणेन यज्ञेन ईजे । सः गवां सहस्रं अवरुरोध दशपादाः एकैकस्या शृङ्गे
आबद्धाः बभूवुः । जनकः उवाच भगवन्तः ब्राह्मणाः ! यो वो ब्रह्मिष्ठः सः
गाः उदजताम् । ते ब्राह्मणा न दधृषुः । याज्ञवल्क्यस्तु शिष्यमाह । साम
एता गाः उदज । ततः ब्राह्मणाः चुक्रुधुः । त्वंच खलु याज्ञवल्क्य ब्रह्मिष्ठोऽसि
याज्ञवल्क्यस्तु ब्रह्मिष्ठाय नमःकुर्मः । गो कामावयम् । ततो ब्राह्मणाः दधृषुः
प्रथमं होताश्वलः प्रश्नानपृच्छत् । अनन्तरं जारत्कारवःपप्रच्छ । अनन्तरं भुज्यु
लाह्यायनिः ततः उषस्तश्चाक्रायणः अथ कहोलः, तदनु आरुणिः उद्दालक
अन्तर्यामिस्वरूपं पप्रच्छ । उपात्तैः द्वादशभिः दृष्टान्तैः अन्तर्यामिस्वरूपं विशदं
चकार । एष ते आत्मा अन्तर्याम्यमृतः । अदृष्टो द्रष्टा अश्रुतः श्रोता अमतो
मन्ता अविज्ञातो विज्ञाता ।

अथ वाचक्नवी उवाच । तस्यापि अक्षरं अन्तर्यामिस्वरूपं व्याचक्
ततः तेषां देवतास्वरूपञ्च प्रत्यपादयत् । अनन्तरं शाकल्यः पप्रच्छ । सोऽपि
पराभूतः याज्ञवल्क्येन, एवं सभायामनेके पण्डिताः विषयविमर्शनंचक्रुः ।

एकदा जनकः वैदेहे आसां चक्रे, याज्ञवल्क्यः आवव्राज तदा जनकः
उवाच । किमर्थं अचारीः किं पशूनिच्छन् अन्वन्ताम् वा उभयमेव सम्राट्
डित्याह याज्ञवल्क्यः, पिता मे उवाच न अनुशिष्य धनं हरेत । जनकः
आह नमस्तेऽस्तु याज्ञवल्क्य अनुमा शाधि । सहोवाच, यथाकामं प्रश्नान् पृच्छ
इति । जाग्रत्स्वप्नसुषुप्तिविचारान्प्रादिशत । स्वयं ज्योतिषं निरदिशत्

एवमेवायं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तः सर्वान्लोकानतिरिच्य अमृतत्वं प्राप्नोति इति श्रेयःपन्थानं व्याचख्यौ। अयमात्मा यथा साधुकारी साधुर्भवति पापकारी पापीभवति। पुण्यः पुण्येन कर्मणा पापः पापेन। काममय एव अयं पुरुषः। यथा कामो भवति तत्क्रतुर्भवति। यत्कर्म कुरुते तदभिसंपद्यते।

अयमात्मा मनसैवानुद्रष्टव्यः नेहनानास्तिकिंचन तमेतं वेदानुवचनेन ब्राह्मणा विविदिषंति। यज्ञेन दानेन तपसा अनाशकेन। अन्ये पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थाय भिक्षाचर्यं चरन्ति। तस्मात् एवं वित् शान्तो दान्तः उपरतः तितिक्षुः समाहितो भूत्वा आत्मन्येवात्मानं पश्यति।

कौरव्यायणीपुत्रः खं ब्रह्म खं पुराणं वेदेनैव वेदितव्यम् इत्याह। अस्मिन्नर्थे आख्यायिका अनूद्यते। देवा मनुष्या असुराश्च प्रजापतौ पितरि ब्रह्मचर्यं ऊषुः। उषित्वा देवा ऊचुः ब्रवीतु नो भगवानिति। तेभ्यः 'द' इत्युवाच व्यज्ञासिष्टाः इति पृष्टाः विज्ञासिष्मेति ऊचुः। दाम्यतेत्यात्थ इत्यूचुः। मनुष्यास्तु "द" इति दत्तेत्यात्थ इत्यवोचन्। असुराः "द" इति वर्णेन दयध्वं इति अध्यगच्छन्। इयं दैवीवाक् वर्तते। स्तनयित्नुः द,द,द, इत्यनुवदति। दाम्यत दत्त दयध्वं इत्यनेन शिक्षयेत्। भूः भुवः सुवः इति व्याहृतिषु विश्वरूपमनुध्यायीत। एवं वाचं धेनुमुपासीत। स्वाहाकारादयः चत्वारः तस्याः स्तनाः। यदा पुरुषः अस्मात् शरीरात् प्रैति सः क्रमशः वायुं आदित्यं चन्द्रमसं च आक्रमते। अन्ततः अशोकमहिमापदं गच्छति। तथैव अन्नप्राणादिषु ब्रह्मदृष्ट्या उपासीत। ऋचः, यजूंषि, प्राणापानं, ब्रह्मदृष्ट्या उपासीत।

अयं लोकः (१) पर्जन्यः (२) पुरुषः (३) योषा (४) अग्निः (५) एवं पञ्चाग्निषु परिवर्तनात् अनेकयोनिषु जायते जीवात्मा।

# पाठः १५

इयमुपनिषत् महानारायणोपनिषत् तथा याज्ञिकी उपनिषदिति प्रथिताऽस्ति। कृष्णयजुर्वेदीये तैत्तिरीयारण्यके इयं दशमः प्रपाठकः। बहवः विषयाः अस्यामुपनिषदि संगृहीता वर्तन्ते। परमात्मा विश्वातीतः विश्वाकार परमेश्वर इति प्रजापतिरिति च अस्य नाम निर्दिश्यते। इदं ब्रह्म परमं विश्वस्य। सर्वव्यापिनं एनं ज्ञानिनः हृदये ध्यायन्तः साक्षात्कुर्वन्ति।

ऋतं च सत्यं च सर्वे देवाश्च परमात्मैव। ऋतं नाम स्थूलं विश्व रूपं। सत्यंनाम ब्रह्मणः चिन्मयं सूक्ष्मरूपं। क्वचित् महद्यक्ष इति निर्देशोऽस्ति केचन ऋषयः ह्री, लक्ष्मीः इति अविनाभूते शक्ती आहुः सर्वं कालाधीनं, परमात्मा तु तेन अतीतः। ज्ञानिनां पिता माता सर्वः परमेश्वर एव। सर्वे देवाः गायत्री प्रभृतयः उपासनासमये भेदेन दृश्यमाना अपि अन्ते परमात्मानमेव उपलक्षयन्ति।

नित्यनैमित्तिकेषु कर्मसु आपः अग्निः सूर्यः, वायुः इत्यादि देव पुरस्कृत्य स्तुतयः सन्ति। मया अनुष्ठितानि पापानि एताः शक्तयः अप दन्तु। मनसा वाचा कायेन च अनुष्ठितानि पापानि, रात्रावनुष्ठितानि अ रुपासनेन, दिवि अनुष्ठितानि सायं च परिहरन्तु। सर्वतः मां एते दे पान्तु।

ऋतं सत्यं श्रुतं शान्तं दमः शमः दानं यज्ञः भूर्भुवःसुवश्च सर्वं तपए संपुष्पितस्य वृक्षस्य दूरात् गन्धः यथा वाति एवं पुण्यस्य कर्मणो ग दूरात् वाति। सः वीतशोकः अक्रतुं पुरुषं पश्यति। तस्मादेव पुरु गिरयः पर्वताः सिन्धवः सर्वं संजायन्ते।

कर्मणा प्रजया धनेन च न अमृतत्वं विन्दन्ते। वेदान्त विज्ञानेन निश्चितार्थाः शुद्धसत्त्वाः न्यासयोगात् यतनशीलाः श्रेयः प्राप्नुवन्ति। हृदयं परवेश्मभूतं वर्तते। तत्र विशोकं गगनं दहरं तस्मिन् परमात्मा उपासितव्यः।

सृष्टिक्रममनुसृत्य आरोहण अवरोहण क्रमेण वर्णनमुपलभ्यते। आदित्यः किरणैः तपति। तेन मेघो वर्षति। तस्मादोषधयः सम्भवन्ति। पुरुषः अन्नेन जीवति। ततः प्राणाः ततः बलं, शमः, तेन श्रद्धादयः, अन्ततः विज्ञानेनात्मानं वेदयति।

भूरिति स्थूलोऽयं लोकः। भुव इति भूतानां लोकः। सुवरिति ज्ञानप्रधानावस्था। महः इति दिव्यं ज्ञानम्। जनः तपः अवस्थान्तराणि। सत्यःमिति ब्रम्हणः स्वरूपम्। तस्य वरेण्यस्य भर्गः ज्योतिः धीमहि, सः वः धियसन्मार्गे प्रचोदयात्।

मां ब्रह्म एतु। मधुमेतु। .. सवितः! दुरितानि परासुव। यद्भद्रं तत् न आसुव। कुतः? अहं किमपि न जानामि। ज्ञानिने सर्वं मधुरेव। वाताः ओषधयः नक्तं द्यौः वनस्पतयः सूर्यः गावश्च मधुमन्तो भवन्ति। अग्ने मां मेधाविनं कृणु।

या मेधा अप्सरस्सु या च गन्धर्वेषु या मानुषी दैवी मेधा मां सा जुषतु। हे ब्रह्मन्, मयि मेधां प्रजां इन्द्रियं ओजश्च आधत्स्व। अपमृत्युः अपैतु। मा न स्तोके तनये आयुषि गोषु अश्वेषु च भूयात्।

प्राणापानसमाना मे शुध्यन्ताम्। ज्योतिः विरजाः भूयासम् वाक् मनः श्रोत्रचक्षुध्याकूतिः संकल्पा मे शुध्यन्ताम्। त्वक् चर्म मांस रुधिर मेदो मज्जा स्नायवोऽस्थीनि मे शुध्यन्ताम्। पृथिव्यप्तेजो वाय्वाकाशा मे शुध्यन्ताम्। शब्दस्पर्श रूप रस गन्धा मे शुध्यन्ताम्। मनोवाक्काय-

कर्माणि मे शुध्यन्ताम्। आत्मा अन्तरात्मा परमात्मा च शुध्यन्ताम्। हे ब्रह्म त्वं रुद्रः, विष्णुः, आपः, भूः, भुवः, सुवः, ओंकारं च असि।

सत्यं परं अस्ति सत्येन वर्तमानाः सुवर्गात् लोकात् न च्यवन्ते। तस्मात् ज्ञानिनः सत्ये रमन्ते। तपः दुर्धर्षं, अनशनात् परं तपः नास्ति तस्मात् तत्र रमन्ते। ब्रह्मचारिणः दमं बहुमन्वाना रमन्ते। अरण्ये मुनयः शमे रमन्ते। सर्वाणि भूतानि दानं प्रशंसंति। दानात् दुष्करं नास्ति। तस्मात् सर्वे दाने रमन्ते। सर्वमिदं धर्मेण परिगृहीतम्। तस्मात् बहवः धर्मे रमन्ते। एवमेव भूयिष्ठा प्रजया, कर्मठाः अग्नि होत्रे, देवाः यज्ञे रमन्ते। मानसं उत्तममिति विद्वांसः मानसोपासने रमन्ते। एतानि सर्वाणि न्यासापेक्षया अवराणि। तस्मात् न्यासे रमन्ते साधकाः।

आरुणिः सुपर्णेयः प्रजापतिं उपससार। भगवन् किं परमं वदंति इति तस्मै प्रोवाच। "सत्ये सर्वं प्रतिष्ठितं, सत्यं परमं वदन्ति।" तपसा अग्रे-देवताः अग्र आयन्। तपसा सपत्नान् प्रणुदामः। तपसि सर्वं प्रतिष्ठितं तस्मात् परमं तत्। दान्ताः दमेन किल्बिषं अवधून्वन्ति। अनेन मुनयः नाकमविन्दन्। अतः दमं परमं वदन्ति। शमेन शान्ताः शिवमाचरन्ति। दानं यज्ञानां वरूथं दातारं सर्वभूतान्युपजीवन्ति। दानेन अरातीनपानुदन्त द्विषन्तो मित्रा भवन्ति। तस्मात् दानं परमं वदन्ति। लोके धर्मिष्ठं प्रजाः उपसर्पन्ति। जगतः प्रतिष्ठा धर्मः। धर्मेण पापमपनुदति। एवमेव अग्नीन् प्रजननादिकं च बहुमन्वते साधकाः।

ओमित्यात्मानं युञ्जीत। एतद्वै देवानां गुह्यं महोपनिषदं यः वेद स ब्रह्मणो महिमानमाप्नोति। तस्य जीवनमेव यज्ञरूपतामश्नुते। विदुषः तस्य आत्मा यजमानः। श्रद्धा पत्नी, शरीरं एव इध्मं, उरः वेदिः, शिखा यूपः। कामः आज्यं, मन्युः पशुः, तपः अग्निः, दमः शमयिता वाक् होता, प्राणः उद्गाता, मनोब्रह्म, श्रोत्रं यावद्म्रियते सा दीक्षा। यः विद्वान् एवमुपास्ते सः ब्रह्मवित्।

# गीतापाठावलिः

## पाठः १

भारतवर्षस्य इतिहासः अतिप्राचीनः अस्ति। अष्टादश पुराणानि, इतिहासाश्च इमं वृत्तान्तं सुविशदं आवेदयन्ति। तेषु महाभारतं नाम इतिहासः अनन्यादृशो वर्तते। अस्य कर्ता महर्षिः वेदव्यासः। अस्मिन् इतिहासे अष्टादशपर्वाणि त्रिधाविभक्तानि सन्ति। आदि-सभा-अरण्य-विराट-उद्योग पर्वाणि-आदि पञ्चकमिति; भीष्म-द्रोण-कर्ण-शल्य-सौप्तिक-स्त्री पर्वाणि-भीष्म षट्कमिति; शान्ति-अनुशासन-आश्वमेधिक-आश्रमवासिक-मौसल-महाप्रस्थान-स्वर्गारोहण-पर्वाणि शान्ति सप्तकमिति चोच्यते। पूर्वस्मिन् काले अस्य इतिहासस्य " जयः " इत्यभिख्या आसीत्। इदानीं महाभारतमिति प्रथितम्। अस्मिन् सपादलक्षश्लोकाः सन्तीति पण्डिताः अभिप्रयन्ति।

भारतभुवि राज्ञामन्ववायेषु चन्द्रवंशः-सूर्यवंशश्च प्रथितौ वर्तेते। तत्र चन्द्रवंशे शन्तनुर्नाम राजर्षिरासीत्। तस्य भीष्म इति महान् ओजस्वी पुत्रो जज्ञे। तस्य माता शापग्रस्ता-भागीरथी आस। अस्मिन् विषये मनोहारिणी कथा वर्तते। अत एवायं गांगेय इति च प्रथितः। कृतविद्यं प्राप्तवयस्कं गाङ्गेयं परिणेतुं अनुरूपकन्यान्वेषणाय शन्तनुरचिन्तयत्। स्नुषां गवेषमाणः दाशराजपुत्रीं सत्यवतीं अपश्यत्। तां दृष्ट्वा तस्यां स्वयमेव रक्तः ललज्ज।

भीष्मः इमं विषयं ज्ञात्वा, तस्याः पितरमासाद्य पित्रे तां ययाचे। दाशराजस्य आवश्यकानुरोधेन [illegible] अपत्येभ्यः राज्यं ददामि' इति प्रतिजज्ञे। एतदर्थं स्वयं यावज्जीवं-नैष्ठिकब्रह्मचर्यं अङ्गीचकार। सत्य-

वत्यां चित्रवीर्य-विचित्रवीर्यौ सञ्जातौ । ततः धृतराष्ट्र-पाण्डु-विदुराः । धृतराष्ट्रस्य दुर्योधनादिपुत्रशतं दुश्शलेति एका दुहिता च जज्ञिरे । पाण्डोः धर्मराजादयः पञ्चपुत्राः प्रादुरभूवन् । एतेषां चरितमेव महाभारतम् ।

अयं ग्रन्थः काव्यरूपेण रसिकान् सम्मोदयति । तत्वविचारेण जिज्ञासूनुद्बोधयति । धर्मकर्म विचारपरिप्लवेन विमर्शकान् आनन्दयति किं बहुना! सर्वसमाहारात्मकोयं ग्रन्थः । "यदिहास्ति तदन्यत्र यन्नेहास्ति नकुत्रचित्" इति व्यासस्य आघोषः ।

वेदव्यासोपि भारतकथायां प्रधानपात्रमुद्वहति । विशेषेण सः सत्यवतीसुतः, पराशरात्मजश्च । महर्षिरयं कौरव-पाण्डवयोः मार्गदर्शकः, मित्रं, बन्धुः, एतेषां इतिहासस्य निर्माता च । धृतराष्ट्रस्य पुत्राः "कौरवाः" इति प्रथिताः । पण्डोःपुत्राः "पाण्डवा" इतिप्रथिताः । एतयोर्वैमनस्यं बाल्यादेव अनेकैः कारणैः ववृधे । अन्ततः उभयपक्षयोः प्रचण्डतरसंग्रामोऽभूत् । अस्य घर्षणस्य निवारणे श्रीकृष्णः वेदव्यासश्च अनेकशः प्रायतेताम् । तथापि तयोः यत्नं निष्फलमेव अभूत् ।

श्रीकृष्णः पाण्डवपक्षमङ्गीकृत्य अर्जुनस्य सारथिर्बभूव । वेदव्यासः मध्यस्थः धृतराष्ट्रं प्रति संगरवृत्तान्तज्ञापनाय "दिव्यदृष्टिं" ददामि इत्याह । जात्यन्धो धृतराष्ट्रः केवल बन्धुमारणदर्शनाय दृष्टिप्राप्तिं निराचकार । कथंचन विषयग्रहणे उपायान्तरमैच्छत् । ततः तस्य मित्राय संजयाय व्यासः दिव्यदृष्टिं ददौ । तेन संजयः संग्रामभूमिमासाद्य प्रकटान् प्रच्छन्नांश्च विषयान् करबदरसमानं आकलय्य अष्टादशदिनानन्तरं हस्तिनापुरं प्रति न्यवर्तत । ततः युद्धस्य दारुण दर्शनेन उद्विग्नः प्रथमं भीष्ममरणं धृतराष्ट्राय श्रावयामास । भीष्ममरणश्रवणेन निर्विण्णो धृतराष्ट्रः संगरवृत्तान्तं विशदतरं श्रोतुं ऐच्छत् संजयोपि वक्तुमारभेत् पूर्वं [illegible] कृष्णार्जुनयोः संवादं अश्रावयत् । सा "भगवद्गीता" इति इदानीं प्रथिता । इयं

भीष्मपर्वणि पञ्चविंशतितम अध्यायमारभ्य त्रिचत्वारिंशदध्याय पर्यन्तं कृष्णार्जुनयोः संवादरूपेण संदब्धा वर्तते । धृतराष्ट्रस्य प्रश्नानन्तरं संजयः कृष्णार्जुनयोः संवादं संगरवृत्तान्तं च निवेदयति ।

---

## पाठः २

धृतराष्ट्रः उवाच :—" संजय मत्पुत्राः तदनुयायिनश्च; पाण्डवाः तेषामनुयायिनश्च, युयुत्सवः अभूवन् । ते समराय धर्मक्षेत्रे कुरुक्षेत्रे समवेता बभूवुः । अनन्तरं ते किमकुर्वत ? इति ।

संजय उवाच :— उभय पक्षयोः अनीकं व्यूढमासीत् । पाण्डवानां पक्षे सप्ताक्षौहिणी सेना सज्जिता । दुर्योधनपक्षे एकादशाक्षौहिणी सेना संघटिता अवर्तत । तदा तव पुत्रो दुर्योधनः पाण्डवानीकं दृष्ट्वा द्रोणमुपगम्य एवं न्यवेदयत् " आचार्य तव शिष्येण धीमता दुष्टद्युम्नेन व्यूढां महतीमिमां पाण्डुपुत्राणां चमूं पश्य । अस्यां सेनायां युधि भीमार्जुनसमा शूराः महेष्वासाः राजन्ते । ते वीर्यवन्तः नरपुङ्गवाः महारथाश्च । सौभद्रादयः द्रौपदेयाश्च विशेषेण अत्र गणनामर्हन्ति । मम सैन्ये ये विशिष्टाः संज्ञार्थं तान् ब्रवीमि । भवान् तान् निबोधतु । अश्वत्थामादयः, भीष्मादयश्च नानाशस्त्रप्रहरणाः युद्धविशारदाः वर्तन्ते । अन्ये बहवः शूराः मदर्थे त्यक्तजीविताः । एवं स्थिते भीष्माभिरक्षितं अस्माकं बलं पाण्डवैः सह योध्दुं अपर्याप्तमिति भावये । भीमाभिरक्षितं पाण्डवानां बलं अस्माभिस्सह योध्दुं पर्याप्तं इति उपलक्षये । तस्मात् यूयं सर्वेषु अयनेषु यथा भागमवस्थिताः भूयास्त । भवन्तः सर्वे एव सर्वदा सर्वथा भीष्ममेव अभिरक्षन्तु " इति ।

एतस्मिन्नन्तरे पितामहो भीष्मः दुर्योधनस्य हर्षं संजनयन् सिंहनादं उच्चैः निनद्य शङ्खं दध्मौ। सेनापतेर्भीष्मस्य सिंहनादमनुपश्रुत्य योधैः शङ्खाः, भेर्यः पणवाः आनकाः, गोमुखाश्च सहसैव अभ्यहन्यन्त। अनेकानां शब्दानां युगपदाविर्भावे सशब्दः तुमुलः अभवत्। ततः श्वेतहयैः युक्ते स्यन्दने स्थितौ माधव पाण्डवौ शंखौ प्रदध्मतुः। एवं अन्ये राजानोपि पृथक् पृथक् स्वीयान् शंखान् दध्मुः। स घोषः तुमुलः नभः पृथिवीं चैव अनुनादयन् तवपुत्राणां हृदयानि व्यदारयत्। अनन्तरं अर्जुनः समराय व्यवस्थितान् स्वदीयान् ददर्श। शस्त्रसंपाते प्रवृत्ते धनुः उद्यम्य हृषीकेशं इदमाह :— अच्युत! उभयोः सेनयोः मध्ये मे रथं स्थापय। योद्धुकामान् अवस्थितान् एतान् साकल्येन निरीक्षे। अस्मिन् रणसमुद्यमे मया कैः सह योद्धव्यम्? दुर्बुद्धेः धार्तराष्ट्रस्य युद्धे प्रियचिकीर्षवः एते अत्र समागताः योत्स्यमानान् तान् अवेक्षे" इति।

अर्जुनस्य इदं वचनं निशम्य उभयोः सेनयोः मध्ये कृष्णः रथं अस्थापयत्। अर्जुन! समवेतान् कुरून् पश्य इति च आह। तत्र अर्जुनः स्थितान् पितॄन्, पितामहान्, मातुलान्, श्वशुरान्, पुत्रान्, पौत्रान् सखीन्, सुहृदः आचार्यांश्च उभयोः सेनयोः मध्ये अपश्यत्। एवं सर्वान् बन्धून् समीक्ष्य कृपया परया आविष्टः अर्जुनः व्यषीदत्।

कृष्ण! इमं युयुत्सुं समुपस्थितं स्वजनं दृष्ट्वा मम गात्राणि सीदन्ति। मुखं परिशुष्यति। शरीरे वेपथुः रोमहर्षश्च जायते। हस्तात् गाण्डीवं स्रंसते। त्वक् च परिदह्यते। स्थातुमपि न शक्नोमि। मे मनः भ्रमतीव। विपरीतानि निमित्तानि पश्यामि; आहवे स्वजनं हत्वा श्रेयः नानुपश्यामि। गोविन्द! विजयं न कांक्षे। राज्यं नेच्छामि। सुखानि न रोचन्ते। राज्येन किं प्रयोजनम्? भोगैर्वा जीवितेन वा किम्? एषामर्थे राज्यं, भोगाः, सुखानि च कांक्षितानि ते इमे युद्धाय अवस्थिताः वर्तन्ते। एते आचार्याः पुत्रादयश्च प्राणान् धनानि च त्यक्त्वा उपस्थिताः। अपि त्रैलोक्यराज्यहेतोः एतान् हन्तुं

नेच्छामि । महीकृते किन्तु हन्यां एतान् ? धार्तराष्ट्रान् निहत्य का प्रीतिः स्यात् । परन्तु एते आततायिनः एनान् हत्वा अस्मान् पापमेवाश्रयेत् । स्वजनं हत्वा कथं सुखिनः स्याम ? तस्मात् वयं एतान् हन्तुं नार्हाः ।

लोभेन उपहतचेतसः एते । मित्रद्रोहे कुलक्षयकृतं दोषं पातकं च न पश्यन्ति । वयं पुनः अस्मिन् समरे कुलक्षयकृतं दोषं पश्यामः । पश्यन्नपि दोषं सुविशदं तस्मिन्नेव कथं प्रवर्तामहे । कुलक्षये सनातनाः कुलधर्माः प्रणश्यन्ति । नष्टे धर्मे कृत्स्नं कुलं, अधर्मः अभिभवति । अधर्माभिभवात् कुलस्त्रियः प्रदुष्यन्ति । स्त्रीषु दुष्टासु वर्णसंकरः जायते । अयं संकरः कुलघ्नानां कुलस्य च नरकाय भवति । एषां पितरः लुप्तपिण्डोदकक्रियाः पतन्ति । शाश्वताः कुलधर्माः जातिधर्माश्च वर्णसंकरकारकैः एतैः उत्साद्यन्ते । मनुष्याणां उत्सन्नकुलधर्माणां नरके वासः नियतः भवति इत्यनुशुश्रुम । फलतः अशेषस्य समाजस्य हानिर्भवति । अहो ! यत् वयं राज्य-सुखलोभेन स्वजनं हन्तुं उद्यताः, महत्पापं कर्तुं व्यवसिताः । इदमसमञ्जसम् । यदि एते शस्त्रपाणयः अशस्त्रं अप्रतीकारं मां रणे हन्युः मे तदेव क्षेमतरं भवेत् । समरभूमौ अर्जुनः कृष्णमेवं निगद्य शोकसंविग्नमानसो बभूव । स शरं चापं च विसृज्य रथोपस्थः उपाविशत् ।

## पाठः ३

लोकात् समरे प्रवृत्तात् चलन्तं दृष्ट्वा अर्जुनं कृपयाविष्टं विषण्णं अश्रुपूर्णाकुलेक्षणं विषीदन्तं मधुसूदनः इदं वाक्यं उवाच :— " अर्जुन ! विषमे अस्मिन् समये, इदं कश्मलं त्वां कुतः समुपस्थितम् ? यतः इदं कश्मलं अकीर्तिकरं अस्वर्ग्यं, अनार्यजुष्टं, च अस्ति । त्वयि इदं क्लैब्यं नोपपद्यते । तत् मा [illegible] क्षुद्रं हृदयदौर्बल्यं त्यक्त्वा [illegible] इति भगवानुवाच ।

अर्जुनः पुनः स्वमनोभावनामेव विशदीचकार। संख्ये भीष्मं, द्रोणं च अहं इषुभिः कथं प्रतियोत्स्यामि ? ते पूजार्हाः किल। अस्मिन् लोके महानुभावान् गुरून् अहत्वा भैक्ष्यमपि भोक्तुं श्रेयः इति मन्ये। यतः अस्मिन् समरे गुरून् हत्वा तद्रुधिरप्रदिग्धान् भोगान् कथं भुंजीय। अनयोः कतरः गरीयान् इति न विद्मः। यद्वा जयेम यदि वा नो जयेयुः। यान् हत्वा न जिजीविषामः त एव धार्तराष्ट्राः प्रमुखे अवस्थिताः। अतः धर्मसंमूढचेताः कार्पण्यदोषेण उपहतस्वभावः अस्मि। अत्र यच्छ्रेयः इति त्वां पृच्छामि निश्चितं यत् श्रेयः तन्मे ब्रूहि। अहं ते शिष्योऽस्मि। प्रपन्नं शाधि। येन शोकेन इन्द्रियाणां इदं संकटं तत् कथमपनुद्याम् ? भूमौ असपत्नं ऋद्धं राज्यं, स्वर्गे सुराणां आधिपत्यं अवाप्यापि न शक्यते खलु अस्मात्संकटात् मोक्तुम्। एवमादि उक्त्वा अर्जुनः "न योत्स्ये" इति तूष्णीं बभूव।

श्रीकृष्णः उभयोः सेनयोः मध्ये विषीदन्तं अर्जुनं प्रहसन्निव इदं वचनमुवाच "अर्जुन ! त्वं अशोच्यान् अन्वशोचः। प्रज्ञावादान् भाषसे। पण्डिताः गतासून् अगतासून् नानुशोचन्ति। अहं, त्वं, इमे जनाधिपाश्च पूर्वमप्यासन्। इदानीं वर्तन्ते। आयत्यां च भविष्यन्ति। अस्मिन् देहे यथा कौमरं, यौवनं, जरा च अनुभूयते तथा देहान्तरप्राप्तिरपि अनुभूयते। धीरः तत्र न मुह्यति। शीत–उष्ण–सुख–दुःखदाः मात्रा-स्पर्शाः आगच्छन्ति अपगच्छन्ति च। अनित्याः खलु एते। तान् तितिक्षस्व। एते यं न व्यथयन्ति सः समदुःखसुखो भवति। सः अमृतत्वाय कल्पते।

असतः भावः [उत्पत्तिः] न विद्यते। सतः अभावः [नाशः] न संभवति। अनयोः निश्चयः दृष्टः। येन इदं सर्वं विश्वं ततं [व्याप्तं] तत् अविनाशीति विद्धि। न कश्चित् अस्य अव्ययस्य विनाशं कर्तुमर्हति। शरीरिणः नित्यस्य अनाशिनः अप्रमेयस्य देहाः अन्तवन्तः तस्मात् युध्यस्व। यः हन्तारं हतं च एनं जीवात्मानं मन्यते उभौ तौ न विजानीतौ। नायं हन्ति न हन्यते। वस्तुतः जीवात्मा न जायते। न वा म्रियते। नायंभूत्वा-भवि

भूयः [ जायते, नश्यति ]। शरीरे हन्यमानेपि अयं अजः, नित्यः शाश्वतः, न हन्यते। यः एनं अव्ययं नित्यं अविनाशिनं वेद ; स पुरुषः कथं ! कं घातयति ? कं हन्ति ? । यथा वा नरः जीर्णानि वासांसि विहाय, अपराणि नवानि गृह्णाति तथा जीर्णानि शरीराणि विहाय देही अन्यानि शरीराणि संयाति। एनं शस्त्राणि न छिन्दन्ति पावको न दहति। आपः न क्लेदयन्ति। मारुतः न शोषयति। अतः अयं, सर्वगतः, अचलः, स्थाणुः, सनातनः, अयं जीवात्मा ईदृशः। अर्जुन त्वं निपुणं चिन्तय। अयं मनसा अचिन्त्यः, स्थूलरूपेण अव्यक्तः। पदार्थसंयोगेन अविकार्यः एनं एवं विदित्वा नानुशोचितु मर्हसि। यदि त्वं ईदृशं जीवात्मानं नित्यजातं मृतं वा मन्यसे तथापि त्वं शोचितुं नार्हसि। कुतः इति चेत् "जातस्य हि ध्रुवो मृत्युः" "मृतस्य जन्मापि ध्रुवं" तस्मात् अपरिहार्ये अर्थे शोचितुं नावसरः।

पार्थ ! भूतानि अव्यक्तादीनि, व्यक्तमध्यानि, पुनः अव्यक्तनिधनानि च, तत्र का परिदेवना ? कश्चिदेव विपश्चित् एनं विषयं आश्चर्यवत् पश्यति, वदति, शृणोति। श्रुत्वापि कश्चित् न वेद। सर्वेष्वपि देहेषु देही अवध्यः। आत्मनः स्वधर्मं अवेक्ष्य न विकंपितुमर्हसि। क्षत्रियस्य धर्म्यात् अन्यत् श्रेयः न विद्यते। इदं स्वर्गद्वारं यदृच्छया आपन्नं अपावृतं च। सुखिनः क्षत्रियाः ईदृशं युद्धं लभन्ते। यदि त्वं इमं धर्म्यं संग्रामं न करिष्यसि ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि। मानवाः भवतः अव्ययां अकीर्तिं कथयिष्यन्ति आचन्द्रार्कम्। "संभावितस्य अकीर्तिः मरणादतिरिच्यते"। त्वां महारथाः रणात् भयात् उपरतं मंस्यन्ते। एषां त्वं बहुमतः आसीः, इदानीं आयस्थां च इतः लाघवं यास्यसि। तव अहिताः तव सामर्थ्यं निन्दन्तः बहून् अवाच्यवादान् वदिष्यन्ति। ततो दुःखतरं किं भूयात् ? हतो वा स्वर्गं प्राप्स्यसि, जित्वा वा महीं भोक्ष्यसे। तस्मात् कृतनिश्चयः युद्धाय उत्तिष्ठ। सुखदुःखे समे कुरु। लाभालाभौ, जयाजयौ च, ततः युद्धाय युज्यस्व। अतः पापं न अवाप्स्यसि।

## पाठः ४

कर्तव्येषु कर्मसु निर्वाह्येषु व्यवहारेषु च यः उपायः अवगतिमावहति सः बुद्धियोगः। बुद्धियोगमुपाश्रित्य ते एषा युक्तिः अभिहिता। अतः एवं योगमार्गं उपपादयामि। योगोनाम कर्मसु कौशलम्। अस्मिन्मार्गे अभिक्रम-नाशो नास्ति। प्रत्यवायो न विद्यते। अस्य धर्मस्य स्वल्पमपि महतो भयात् त्रायते। बहवो मार्गाः वर्तन्ते अव्यवसायिनाम्। बुद्धयः अनन्ताः बहुशाखाश्च भवेयुः। व्यवसायिनो पुनः एका व्यवसायात्मिका बुद्धिः समस्ति। केचन वेदवादरताः कामात्मानः अविपश्चितः सन्ति। ते अविपश्चितः स्वर्ग-पराश्च भवन्ति। भोगं ऐश्वर्यं च कामयन्ते। नान्यदस्तीति च प्रति तिष्ठति। तत्साधनाय जन्मकर्मफलप्रदां क्रियाविशेषबहुलां पुष्पितां वाचं प्रवदन्ति। भोगे ऐश्वर्ये च प्रसक्तानां समाधौ व्यवसायात्मिका बुद्धिः न विधीयते। वेदाः सामान्येन त्रैगुण्यविषयान् आवेदयन्ति। भवान् निस्त्रैगुण्यो भव। निर्द्वन्द्वभावान् अभिवर्धय। नित्यं सत्वस्थो भूयाः। योगक्षेमभावनां अतीत्य आत्मवान् भव। यथा संप्लुतोदके उदपाने पिपासा-शान्त्यै यावानर्थः आदीयते तथा विजानतः सर्ववेदेषु ब्राह्मणस्य तावानेवार्थः आदातव्यः। ते कर्मण्येवाधिकारः। फलेषु कदाचन नाधिकारः। अतः अकर्मण्यतायां ते संगः मा भूत्। योगस्थः संगं त्यक्त्वा कर्म कुरु। कर्म-फलानां सिध्यसिध्योः समत्वं योगः इति स्थितिः। बुद्धियोगात् कर्म अवरम्। फलहेतवः कृपणाः भवन्ति। तस्मात् बुद्धौ शरणमन्विच्छ। बुद्धियुक्तः इह सुकृतदुष्कृते जहाति। तस्मात् योगाय युज्यस्व। मनीषिणः बुद्धियुक्ताहि भवन्ति। कर्मणां फलं त्यजन्ति। तस्मात् जन्मबन्धविनिर्मुक्ताः अनामयं पदं गच्छन्ति। यदा ते मोहकलिलं बुद्धिः व्यतितरिष्यति तदा श्रोतव्यस्य श्रुतस्य च निर्वेदं गन्तासि। यदा निश्चिता बुद्धिः स्थास्यति पूर्वं श्रुतिविप्रति-पन्नापि [illegible] समाधौ अचला भवि[illegible] योगमवाप्स्यसि इति।

अर्जुन उवाच "समाधिस्थस्य का भाषा ? सः किं प्रभाषेत ? किमासीत ? व्रजेत किम् ?" इति । भगवान् उवाच "मनोगतान् सर्वान् कामान् यदा प्रजहाति आत्मन्येव आत्मना तुष्यति सा चरमावस्था । दुःखेषु अनुद्विग्नमनाः, वीतरागभयक्रोधः, सुखेषु विगतस्पृहश्च सा तृतीया स्थितिः । व्यवहारेषु शुभाशुभं तत्र तत्र प्राप्यापि यः सर्वत्र अनभिस्नेहः, नाभिनन्दति, नद्वेष्टि तस्य सा द्वित्वीयावस्था; यदा मानवः इन्द्रियार्थेभ्यः इन्द्रियाणि, कूर्मः अंगानीव उपसंहर्तुं समर्थो भवति सा प्रथमावस्था । विषयाः देहिनं तरतमभावेन आकर्षन्ति । परं दृष्ट्वा पूर्वविषये स्पृहा निवर्तते । विपश्चितः पुरुषस्य यततोपि इन्द्रियाणि प्रसभं मनः हरन्ति । सर्वाणि तानि संयम्य मत्परः युक्तः आसीत । तस्य इन्द्रियाणि वशे तिष्ठेयुः । तस्य प्रज्ञा प्रतिष्ठिता भवति । पुरुषः प्रथमं विषयान् ध्यायति । विषयध्यानात् तेषु संगः संजायते । विषयसंगात् कामः उपजायते । कामसिध्देः प्रतिबन्धे क्रोधः अभिजायते । क्रोधेन संमोहो भवति । सम्मोहात् स्मृतिविभ्रमो जायते । स्मृतिभ्रमात् बुद्धिः नश्यति । ततः प्रणश्यति । तस्मात् रागद्वेषवियुक्तैः इन्द्रियैः विषयान् चरन् विधेयात्मा प्रसादं अधिगच्छति । इन्द्रियाणां प्रसादे जाते अस्य पुरुषस्य सर्वदुःखानां हानिः उपजायते । प्रसन्नचेतसः बुद्धिः आशु पर्यवतिष्ठते । अयुक्तस्य बुद्धिः नास्ति । भावना च न संभवति । अभावयतः शान्तिः कथम् ? अशान्तस्य सुखं कुतः ? मनः चरतां इन्द्रियाणां अनुविधीयते । तत् मनः अम्भसि वायुः नावमिव प्रज्ञां हरति । यस्य इन्द्रियार्थेभ्यः इन्द्रियाणि निगृहीतानि तस्यैव प्रज्ञा प्रतितिष्ठति । सर्वभूतानां या अवस्था निशा संयमी तस्यां जागर्ति । यस्यां अवस्थायां भूतानि जाग्रति तत्वं पश्यतो मुनेः सा निशावत् भवति । आपः अनेकशः समुद्रं प्रविशन्ति । सागरः न पूर्यते, नोद्विजते च । तथैव कामाः यं प्रविशन्ति तैः यः नोद्विजते न बंभ्रमीति सः शान्ति प्राप्नोति । कामान् कामयमानः न कदापि शान्ति अधिगच्छति । यः निस्पृहः पुमान् कामान् विहाय चरति सः निर्ममः निरहंकारश्च भवति । शान्ति च अधिगच्छति एषा ब्राह्मीस्थितिः इत्युच्यते । एतां तत्वतः प्राप्य न

कदापि मुह्यति । ईदृशीं अवस्थां प्राप्तः पुरुषः अप्रमादेन अन्तकालेपि तस्यां स्थित्वा ब्रह्मनिर्वाणं ऋच्छति । इति ।

## पाठः ५

जनार्दन ! कर्मणः अपेक्षया बुद्धिः ज्यायसीति तवमतं चेत् किमर्थं मां घोरे कर्मणि नियोजयसि त्वं व्यामिश्रेण वाक्येन मे बुद्धिं मोहयसीति संभावयामि । तस्मात् मम श्रेयसे निश्चित्य एकं वाक्यं वद ।

भगवान् आह :- अर्जुन पुरा मया द्विविधा निष्ठा प्रोक्ता । सा ज्ञानयोगार्हाणां ज्ञानं, कर्मयोगार्हाणां कर्म इति विभक्ता । नैष्कर्म्यं कर्मणां अनारंभात् नैव पुरुषः अश्नुते । न वा कर्मणां सन्न्यासात् सिद्धिं समधिगच्छति । पुरुषः क्षणमपि अकर्मकृत् न जातु तिष्ठति । प्रकृतिजैःगुणैः सर्वं कर्म अवशः क्रियते । कर्मेन्द्रियाणि संयम्य यः मनसास्मरन्नास्ते सः मिथ्याचारः इत्युच्यते । यः पुनः मनसा इन्द्रियाणि नियम्य असक्तः कर्मेन्द्रियैः सर्वाणि कर्माणि निर्वर्तयति सः विशिष्यते । अकर्मणः अपेक्षया कर्मानुष्ठानं वरम् । अकर्मणः शरीरयात्रापि न प्रसिध्यति । ततः नियतं कर्म कुरु । विश्व व्यापाराः सर्वे यज्ञरूपाः । तदेकप्रयोजनाय कर्मनिर्वहणं न बन्धाय भवति । ये इमं न विन्दन्ति तेषां कर्माणि बन्धाय भवन्ति । मुक्तसंगः तदर्थं कर्मसमाचर । पुरा प्रजापतिरपि प्रजाः सहयज्ञाः सृष्ट्वा उवाच :— "विश्वव्यापारानुयायिना यज्ञकर्मणा इष्टार्थान् प्रसविष्यध्वम् । एष यः इष्टकामधुक् अस्तु इति" यूयं अनेन प्रकारेण कर्मणा देवान् भावयन्तु । ते देवाः लोकान् भावयन्तु । एवं परस्परं भावयन्तः श्रेयः परं अवाप्स्यथ । यज्ञभाविताः देवा

इष्टान् भोगान् दास्यन्ते । तैर्दत्तान् भोगान् अन्येभ्यः अप्रदाय यः स्वयं भुङ्क्ते सः स्तेन एव । यज्ञशिष्टाशिनः सर्वकिल्बिषैः मुच्यन्ते । आत्मकारणात् ये पचन्ति ते पापाः-ते अघं पचन्ति भुंजते च । कर्मणा यज्ञः, यज्ञात् पर्जन्यः, पर्जन्यात् अन्नं, अन्नात् भूतानि च भवन्ति । तच्च कर्म ब्रह्मोद्भवं, ब्रह्म अक्षर-समुद्भवं विद्धि । तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् । यः एवं प्रव-र्तितं चक्रं नानुवर्तते सः मोघं जीवति ।

प्रकृष्टज्ञानिनः आत्मरतयो भविष्यन्ति । आत्मतृप्ताः आत्मन्येव च संतुष्टाः मोदन्ते । तेषां व्यवहारकर्मनिर्वहणं अकिञ्चित्करम् । अकृतेन कर्मणा तेषां काचन हानिः नास्ति । अस्यसर्वभूतेषु न कश्चित् अर्थव्यपाश्रयः अस्ति । एवं ज्ञानानुभवस्य स्थितिः वर्तते । तस्मात् असक्तः सततं कार्यं कर्म समाचार । हि असक्तं कर्म आचरन् परं आप्नोति । पूर्वस्मिन्काले जनकादयः प्रकृष्टज्ञानिनः आसन् । ते कर्मणैव संसिद्धिं आस्थिताः । नायं लोकसंग्रहः सामान्यविषयः । त्वमपि इमं संपश्यन् कर्म कर्तुमर्हसि । सामान्यजनाः, श्रेष्ठः यद्यदाचरति तत्त-देव अनुतिष्ठन्ति । सः यत् प्रमाणं कुरुते, तदनुवर्तते लोकः ।

उदाहरणार्थं मामेव पश्य । मे त्रिषु लोकेषु कर्तव्यं किंचिदपि नास्ति । अन-वाप्तं अवाप्तव्यं न विद्यते । तथापि मम शक्तेः अनुगुणं कर्म निर्वर्तये । यदि अत-न्द्रितोहं कर्माणि न अनुवर्ते, मनुष्याः सर्वशः मम वर्त्म अनुवर्तन्ते । अतः यद्यहं कर्म न कुर्यां इमे लोकाः उत्सीदेयुः । तथाच अकर्मण्यता लोकान् प्रसेत् । तदा अहमेव प्रजानां भावनासु संकरस्य कर्ता स्याम् । येन तेषां विनाशे अहं हेतुर्ता भजेयम् ।

अविद्वांसः कर्माणि आसक्ताः यथा कुर्वन्ति विद्वान् लोकसंग्रहं चिकीर्षुः असक्तः तथा कर्म कुर्यात् । विद्वान् कर्म संगिनां बुद्धिभेदं न जनयेत् । स्वयं तत्वज्ञानयुक्तः सर्वाणि कर्माणि समाचरन् तान् जोषयेत् । परंतु इयान् भेदः वरीवर्ति । सर्वशः प्रकृतेः गुणैः क्रियमाणानि कर्माणि अहङ्कारविमूढात्मा स्वयं

अहमेवास्य कर्ता च इति मन्यते । गुणानां कर्मणां च विभागे यः तत्त्ववित् गुणाः गुणेषु वर्तन्ते इति मनुते । गुणकर्मसु संगः प्रकृतेः गुणैः संमूढानां भवति । कृत्स्नवित् अकृत्स्नविदः तान् मन्दान् न विचालयेत् । अध्यात्मचेतसा सर्वाणि कर्माणि सन्यस्य निर्ममः निराशीश्च भूत्वा विगतज्वरः युध्यस्व । इदं मे मतम् नित्यमनुतिष्ठन्ति ये श्रद्धावन्तः अनसूयन्तः कर्मणा तेपि मुच्यन्ते । ये तु अभ्यसूयन्ति मे मतं नानुतिष्ठन्ति तान् सर्वज्ञान विमूढान् विद्धि; अचेतसः ते नश्यन्ति च । ज्ञानी अपि स्वस्याः प्रकृतेः सदृशं चेष्टते। भूतानि प्रकृतिं यन्ति किं निग्रहःकरिष्यति ? इन्द्रियाणां प्रत्येकस्मिन् अर्थे रागद्वेषौ व्यवस्थितौ । तयोः वशं नागच्छेत् । साधकस्य ज्ञानत्रिकाले इमौ द्वौ परिपन्थिनौ भवतः । सहजो धर्मः विगुणोपि श्रेयान् । अस्वाभाविका गुणाः आचरणभूमौ तिष्ठन्ति । अत एव परधर्मः भयावहः । स्वधर्मे निधनं श्रेयः। अर्जुन आह :—पुरुषः केन प्रयुक्तः पापं चरति ? अनिच्छन्नपि केन बलात् इव नियोजितः " इति । भगवान् आह :—काम क्रोधौ रजोगुणसमुद्भवौ भवतः। महाशनौ महापाप्मानौ एतौ । तौ वैरिणौ विद्धि । यथा आदर्शः मलेन आवियते धूमेन वह्निः, उल्वेन गर्भः आवृतः एवं काम क्रोधाभ्यां ज्ञानं आवृतम्। दुष्पूरोयं कामः अनलकल्पः-इन्द्रियाणि मनश्च एतयोः अधिष्ठानभूमिः । इमौ ज्ञानमावृत्य देहिनं विमोहयतः । तस्मात् त्वं आदौ इन्द्रियाणि नियम्य ज्ञानविज्ञननाशनं पाप्मानं एनं प्रजहि । इन्द्रियाणि सूक्ष्माणि सन्ति । तेषामपेक्षया मनः सूक्ष्मतरमस्ति । मनसः परा बुद्धिः, बुद्धेः परतः पुमान् । एवं विद्यमानं सूक्ष्मतमं बुद्धेः परं बुध्वा आत्मना आत्मानं संस्तभ्य दुरासदं कामरूपं शत्रुं जहि ।

## पाठः ६

श्रीभगवानाह :— इमं योगं पूर्वं विवस्वते उक्तवान् अस्मि । सः मनवे प्राह । इक्ष्वाकवे मनुः अब्रवीत् । एवं परंपराप्राप्तं इमं राजर्षयो विदुः । सः योगः महता कालेन इह नष्टः । अद्य स एव पुरातनो योगः प्रोक्तः । इदं उत्तमं गुह्यतमञ्च । समकालिकं कृष्णं दृष्ट्वा अर्जुनः पप्रच्छ :— विवस्वतः जन्म पूर्वमभवत् । भवान् इदानीं असि । त्वमेव इमं योगं विवस्वते आदौ प्रोक्तवानिति कथं विजानीयां " इति ।

भगवानाह—अर्जुन तवच ममच बहूनि जन्मानि व्यतीतानि । सर्वाणि तानि अहं वेद परन्तु त्वं न वेत्थ । अव्ययात्मा अजोपि भूतानां ईश्वरोपि अहं आत्ममायया स्वां प्रकृतिमधिष्ठाय संभवामि । यदा यदा धर्मस्य ग्लानिः भवति, अधर्मस्य अभ्युत्थानं च तदा तदा आत्मानं धर्मरक्षणाय सृजामि । साधूनां परित्राणाय, दुष्कृतां विनाशाय च युगे युगे संभवामि । एवं मे जन्म कर्म च यो वेत्ति सः देहं त्यक्त्वा पुनर्जन्म नैति । बहवः मामुपश्रिताः ज्ञानतपसा पूताः—वीतरागभयक्रोधाः मद्भावमागताः मां ये यथा प्रपद्यन्ते तान् तथैव भजामि मानवाः कर्मणा सिद्धिं कांक्षन्ते । तदर्थं देवान् यजन्ते । मानुषे लोके कर्मणा सिद्धिः क्षिप्रं हि भवति । गुणानां कर्मणाञ्च विभागशः चातुर्वर्ण्यं मया सृष्टम् । तस्य कर्ता अकर्ता च अहमेव । मां कर्माणि न लिंपन्ति । कर्मफले मम स्पृहा नास्ति इति यः अभिजानाति सः कर्मभिः न बध्यते । मुमुक्षुभिः पूर्वैरपि एवं ज्ञात्वा कर्म कृतम् तस्मात् त्वं पूर्वैः पूर्वतरैः कृतं कर्मैव कुरु । परन्तु किं कर्म ? किमकर्म ? इति विषये पण्डिता अपि मोहिताः । यत् कर्म ज्ञात्वा अशुभात् मोक्ष्यसे तत्प्रवक्ष्यामि ।

कर्म, विकर्म, अकर्मेति त्रिधाभेदः वर्तते । यः मानवः कर्मणि अकर्म पश्येत् अकर्मणि च कर्म पश्येत् सः मनुष्येषु बुद्धिमान् कृत्स्नकर्मकृच्च

भवति । तस्मात् कर्मणः गतिः गहना । यस्य पुरुषस्य सर्वे समारंभाः, काम-संकल्प वर्जिताः, तं बुधाः ज्ञानाग्निदग्धकर्माणं पण्डितं आहुः । यः कर्मफलं संगं त्यजति, नित्यतृप्तः निराश्रयश्च भवति सः कर्मणि अभिप्रवृत्तोऽपि नैव किञ्चित्करोति । यतचित्तात्मा परिग्रहरहितः निराशीः शारीरं केवलं कर्म कुर्वन् किल्बिषं नाप्नोति । द्वन्द्वातीतः विमत्सरः भवति । सिद्धौ असिद्धौ च समः स्यात् । तेन यदृच्छालाभसन्तुष्टः न निबध्यते । ज्ञानावस्थितचेतसः गत-संगस्य युक्तस्य यज्ञाय कर्म आचरतः समग्रं प्रविलीयते । सर्वमिदं ब्रह्मात्मकं हविः, अर्पणं, हुतं च ब्रह्मैव । ब्रह्म कर्म समाधिना ब्रह्म गन्तव्यम् ॥

केचन योगिनः यज्ञम् दैवं पर्युपासते । अन्ये शब्दादीन् इन्द्रियाग्निषु जुह्वति । अपरे इन्द्रियकर्माणि, प्राणकर्माणि च ज्ञानदीपिते आत्मसंयम योगाग्नौ जुह्वति । यतयः स्वाध्याय यज्ञाः, योगयज्ञाः, द्रव्ययज्ञाः संशितव्रता वर्तन्ते । अपाने प्राणं केचन जुह्वति । प्राणायाम परायणाः प्राणापानगतीः रुन्धन्ति । अपरे नियताहाराः प्राणान् प्राणेषु जुह्वति । एते सर्वे यज्ञविदः यज्ञक्षपितकल्मषाश्च । यज्ञशिष्टामृतभुजः, सनातनं ब्रह्म यान्ति । अयज्ञस्य अयमेव लोको नास्ति अन्यो लोकः कुतः ? एवं ब्रह्मणो मुखे बहुविधा यज्ञाः विहिताः । तान् सर्वान् कर्मजान् विद्धि । ज्ञानयज्ञः द्रव्ययज्ञात् श्रेयः । सर्वं कर्म ज्ञाने परिसमाप्यते । तत्त्वदर्शिनः सेवया, परिप्रश्नेन प्रणिपातेन च तद्विद्धि । ते उपदेक्ष्यन्ति । तत् ज्ञात्वा एवं न मुह्यसि । अशेषेण भूतानि मयि द्रक्ष्यसि । सर्वेभ्यः पापेभ्यः पापकृत्तमोपि सर्वं वृजिनं ज्ञानप्लवेन सन्तरिष्यसि । यथा समिद्धो अग्निः एधांसि भस्मसात्कुरुते तथा सर्वाणि कर्माणि ज्ञानाग्निः भस्मसात् कुरुते ।

ज्ञानेन सदृशं किंचन नास्ति । कालेन स्वयं सिद्धिं लभते । इदं पवित्रम् । श्रद्धावान् संयतेन्द्रियः तत्परः ज्ञानं लभते । तेन अचिरेण परां शांतिं अधिगच्छति । यः अज्ञः अश्रद्दधानः संशयात्मा च सः विनश्यति । संशयात्मनः अयं लोकोपि नास्ति, न वा सुखं, तथा परलोकोपि नास्ति । योगेन कर्म संन्यस्तम् ज्ञानेन संशयं छिन्द्यात् । आत्मवन्तं कर्माणि न क्षिपन्ति ।

तस्मात् आत्मनः अज्ञानसंभूतं हृत्स्थं संशयं छित्वा योगमातिष्ठ, उत्तिष्ठ ।

## पाठः ७

कृष्ण त्वं कर्मणां सन्यासं बहुमनुषे । पुनः सर्वेषां कर्मणां निर्वहणं च शंससि । अनयोः कतरः श्रेयान् ? तत् निश्चितं मे ब्रूहि इति अर्जुनः अपृच्छत् ।

कृष्णः उवाचः— कर्मणां सन्यासः तेषामाचरणं च द्वावपि निश्रेयस-करावेव । तयोः सर्वकर्मणां निर्वहणं विशिष्यते । कर्म सन्यासस्यतु एवमाशयः वर्तते । यः किमपि कर्मणां फलं नद्वेष्टि न कांक्षति सः नित्यसन्यासीति ज्ञेयः । सैव निर्द्वन्द्वः इत्युच्यते मुच्यते च, सः संसारबन्धनात् । अकृतमतयः कर्म-निर्वहणं योगं कर्म सन्यासं च [सांख्यं] विभिन्नफले इति प्रवदन्ति । तयोर्भेदो नास्ति । तत्वतः एकमप्यास्थितः उभयोः सम्यक् फलं विन्दते । अभेदेन यः एतौ उभौ पश्यति सः तत्वदर्शी । स्पृहां यः मनसा त्यजति सः योगयुक्तः इत्युच्यते ! तादृशेन संगरहितेन मनसा विजितात्मा जितेन्द्रियश्च भवति । अत एव विशुद्धात्मा योगयुक्तश्च । सर्व भूतेषु आत्मभूतं आत्मानं पुरस्कृत्य कर्म कुर्वन्नपि न लिप्यते । दर्शनस्पर्शनादिषु अहं न किंचित् करोमीति तत्ववित् मन्यते । प्रलपनविसर्जनादिषु इन्द्रियाणि इन्द्रियार्थेषु वर्तन्ते इति धारयति । योगिनः कायेन मनसा बुध्या केवलैः इन्द्रियैः च संगं त्यक्त्वा कर्म कुर्वन्ति । परन्तु आत्मशुद्धये ब्रह्मण्याधाय कर्म कुर्वन्ति । एते युक्ताः इत्युच्यन्ते । मनसा कर्मफलत्यागेन नैष्ठिकीं शान्तिं आप्नुवन्ति अयुक्ताः पुनः फले सक्ताः निबध्यन्ते ।

नवद्वारे पुरे देही नैव कुर्वन् न कारयन् मनसा सन्यस्य सुखी वशी आस्ते । परमात्मा लोकस्य कर्तृत्वं, कर्माणि च न सृजति । कर्म फलसंयोगं च

नावहति । स्वभावस्तु प्रवर्तते विभुः पापं वा पुण्यं वा नादत्ते । ज्ञानं अज्ञानेन आवृतम् । तेन जन्तवः मुह्यन्ति । आत्मनः अज्ञानं येषां ज्ञानेन नष्टं तेषां तत्परं ज्ञानं आदित्यवत् प्रकाशते । तद्बुद्धयः तत्परायणाश्च ज्ञाननिर्धूतकल्मषाः परं यन्ति । समदर्शिनः ब्राह्मणे, गवि, हस्तिनि, शुनि, श्वपाके च समं आत्मतत्वं पश्यन्ति । ब्रह्म निर्दोषं समं सर्वत्र विद्यते । येषां मनः साम्ये स्थितम् तैः सर्गः इहैव जितः । प्रियं प्राप्य न प्रहृष्येत् । अप्रियं प्राप्य नो द्विजेत्, एवं यः स्थिरबुद्धिः सः असंमूढः, ब्रह्मवित्, ब्रह्मण्येव स्थितश्च भवति । बाह्यस्पर्शेषु असक्तः आत्मनि यत्सुखं विन्दति तत् अक्षयम् । संस्पर्शजाः भोगाः दुःखयोनय एव भवन्ति । ते आद्यन्तवन्तः तेषु बुधः न रमते । शरीरविमोक्षात् पूर्वं यः कामक्रोधोद्भवं वेगं सोढुं शक्नोति सः सुखी नरः । अन्तःसुखः अन्तरारामः अन्तर्ज्योतिः ब्रह्मनिर्वाणं लभते । ते स्वजीवने क्षीणकल्मषाः द्वन्द्वातीताः । यतात्मानः अतएव सर्वभूतहितेरताः भविष्यन्ति । कामक्रोधवियुक्तानां विदितात्मनां अभितः ब्रह्मनिर्वाणं वर्तते । बाह्यस्पर्शान् त्यक्त्वा भ्रुवोरन्तरे प्राणं स्थापयेत् । नासाभ्यन्तरचारिणौ प्राणापानौ समौ कुर्यात् । यः यतेन्द्रियमनोबुद्धिः सः सदा मुक्तएव । अथवा सर्वलोक महेश्वरं सर्वकर्मफलानां भोक्तारं सर्वभूतानां सुहृदं ज्ञात्वा शान्ति ऋच्छति ।

## पाठः ८

भगवानाह :—कर्मफलं अनाश्रित्य यः कर्मकरोति सः सन्यासी योगी च भवति । अक्रियः निरग्निश्च सन्यासी न भवति असन्यस्तसंकल्पः योगी न स्यात् । योगं आरुरुक्षोः कर्माचरणं साधनमुच्यते । योगारूढस्य कर्मणां शमः कारणमुच्यते । इन्द्रियार्थेषु कर्मसु यः नानुषज्जते सः सर्व संकल्प-

सन्यासी योगारूढश्च । योगश्च सन्यासश्च अभिन्नौ भवतः । आत्मना, आत्मानं उद्धरेत् । न कदाप्यवसादयेत् । आत्मानाम मनः, इदं जीवात्मनः बन्धुः रिपुश्च । जितंचेत् बन्धुरिव हितमाधत्ते । अजितं चेत् शत्रुरिव अरुन्तुदं भवति । मानापमानयोः सुखदुःखयोश्च विजितात्मा प्रशान्तो भवति । तस्य परमात्मा समाहितः । व्यवहारज्ञानेन तत्वज्ञानेन च तृप्तात्मा विजितेन्द्रियः कूटस्थः निर्विकारः समलोष्ठाश्मकाञ्चनः योगी भवति । तादृशः सुहृत् ! मित्र, अरि, उदासीनेषु तथा मध्यस्थ द्वेष्य बन्धुष्वपि, समबुद्धिः विशिष्यते ।

एकाकी रहसि स्थितः आत्मानं सततं युञ्जीत । शुचौ देशे यतचित्तात्मा आसनं प्रतिष्ठाप्य उपविश्य मनः एकाग्रं कृत्वा आत्मविशुद्धये योगं युंज्यात् । अचलं स्थिरः स्वं नासिकाग्रं सम्प्रेक्ष्य विगतभीः मनः संयम्य मच्चित्तः आसीत । नियतमानसः एवमात्मानं युञ्जन् निर्वाणपरमां शान्ति अधिगच्छति । आहार-विहार-निद्रासु नियतो भवेत् । यदाविनियतं चित्तं आत्मन्येव अवतिष्ठते सः युक्तः भवति । चित्तस्य निवातस्थदीपस्य उपमा दीयते । योगसेवया चित्तं उपरमते । तेन आत्मानं पश्यन् तुष्यति । इदं सुखं अतीन्द्रियं बुद्धिग्राह्यं आत्यन्तिकंच । योगी ततः अधिकं न मनुते । तस्मिन् स्थितः गुरुणापि दुःखेन न विचाल्यते । अनिर्विण्णचेतसा अयं योगः योक्तव्यः । मनसैव इन्द्रियग्रामं नियमयेत् । संकल्पप्रभवान् कामान् अशेषतः त्यजेत् । धृतिगृहीतया बुध्या शनैरुपरमेत् । चञ्चलं मनः वशमानयेत् । ईदृशं योगिनं उत्तमं सुखमुपैति । ब्रह्मसंस्पर्शसुखं अश्नुते, समदर्शनो भविष्यति । सर्वथा वर्तमानः ब्रह्मण्येव वर्तते । सुखं वा दुःखं वा आत्मौपम्येन पश्यति ।

चञ्चलमनसां अयं योगः कष्टतर एव । तथापि कर्तव्यानां अभ्यासेन, त्यक्तव्येषु वैराग्येण च गृह्यतेऽयं योगः । वश्यात्मना उपायतः अवाप्तुं शक्यः । यदि शिथिलमानसः योगभ्रष्टो भवेत् तादृशः न इह न अमुत्र विनश्यति । शुचीनां श्रीमतां गेहे अभिजायते । ईदृशं जन्म लोके दुर्लभम् ।

योगतत्वं जिज्ञासमानश्च शब्दव्युत्पाद्यं विश्वतत्वंमतिक्रामति; अथवा योगिनामेव कुले जन्म भवति तत्र पूर्वदैहिकं बुद्धिसंयोगं लभते। अनेकजन्म संसिद्धः सन् परां गतिं याति। योगी सर्वेभ्योऽधिकः यः श्रद्धावान् मां भजते सः एव युक्ततमः।

पार्थ! मदाश्रयः योगं युञ्जन् यथा मां ज्ञास्यसि तच्छृणु। अहं ते सविज्ञानं इदं ज्ञानं वक्ष्यामि। इदं ज्ञात्वा भूयः ज्ञातव्यं नावशिष्यते। मनुष्याणां सहस्रेषु सिद्धये कश्चिदेव यतते। तेषु कश्चिदेव तत्वतः मां वेत्ति। भूम्यादयः अष्टधा भिन्ना मे प्रकृतिः। यथा, धार्यते इदंजगत् जीवभूता सा अपरा प्रकृतिः। सर्वाणि भूतानि एतद्योनीनि। प्रभव प्रलययोः अहमेव कारणम्। मत्तः परतरं नान्यत् किंचित् अस्ति। मयि सर्वमिदं सूत्रे मणिगणा इव प्रोतम्। सर्वेषु जीव-जडेषु सारभूतः अहमेव। मां सर्वभूतानां बीजं विद्धि। धर्माविरूद्धः कामः क्रोधश्चास्मि। ते मयि वर्तन्ते। अहं न तेषु वर्ते; इदं जगत्सर्वं एभिः त्रिभिः गुणमयैः भावैः मोहितम्। एषा गुणमयी दैवीमाया। सामान्यैः इयं दुरत्यया दुष्कृतिनः मां न प्रपद्यन्ते। आर्तः जिज्ञासुः आर्थार्थी, ज्ञानीति चत्वारः भक्ताः। सर्व एते उदाराः, ज्ञानीतु मे आत्मा। एवं एते सुकृतिनः मां प्रपद्यन्ते। ज्ञानवान् बहूनां जन्मनां अन्ते मा प्रपद्यते। ये यथा भजते तां तथैव भजामि। सर्वे मयैव विहितान् कामान् भजन्ते। देवान् देवयजो यान्ति। मां अबुद्धयः अव्यक्तं व्यक्तिमापन्नं मन्यन्ते। नाहं प्रकाशः सर्वस्य। वेदाहं समतीतानि भविष्याणि-वर्तमानानि च ये जरामरणमोक्षाय यतन्ति ते ब्रह्म विदुः। अधिभुतं अधिदैवं अधियज्ञं च ये प्रयाणकालेऽपि विदुः युक्तचेतसः ते।

अर्जुनः आह,— हे! पुरुषोत्तम! किमध्यात्मम् किं ब्रह्म? किं कर्म? अधिदैवं किम्? अधियज्ञः कथम्? प्रयाणकाले कथं नियतात्मभिः ज्ञेयोऽसि? भगवानाह;—ब्रह्म अक्षरम्। तत् स्वभावः अध्यात्ममित्युच्यते। सृष्टिप्रलयात्मकं कर्म। क्षरो भावः अधिभूतम्। पुरुषः अधिदैवतम्। अधियज्ञः

अस्मिन् देहे अहमेव। मामेव अन्तकालेस्मरन् कलेवरं मुक्त्वा मद्भावं याति। यं यं भावं स्मरन् कलेवरं त्यजति तमेवैति। तस्मात् सदा मामनुस्मर युध्यस्व च। अभ्यासयोगयुक्तेन च परं यान्ति। प्रयाणकाले अचलेन मनसा भक्त्या युक्तः योगबलेन प्राणं भ्रुवोर्मध्ये आवेश्य दिव्यं पुरुषमुपैति। सर्वद्वाराणि संयम्य; मनः हृदि निरुध्यात्, प्राणं मूर्ध्नि आदधीत। ओं इति एकाक्षरं व्याहरेत्। यत् प्रणवं वेदविदः वदन्ति; यमिच्छन्तः वीतरागाः ब्रह्मचर्यं चरन्ति तत्ते वक्ष्ये, एतत् ॐ इत्युच्यते। ॐ इत्येकाक्षरं व्यवहरन् यः प्रयाति सः परमां गतिं प्राप्नोति। अनन्यचेताः सततं यो मां स्मरति तस्याहं सुलभः। मामुपेत्य पुनर्जन्म नाप्नुवन्ति। सर्वाः अहरागमे व्यक्ताः भवन्ति। रात्र्यागमे अव्यक्तसंज्ञके प्रलीयन्ते। तस्मात् अन्यः भावः परः नास्ति। अयं नश्यत्सु न विनश्यति। सः अव्यक्तः अक्षरः इत्यादिपदैः उच्यते। स पुरुषः अनन्यया भक्त्या लभ्यः। ब्रह्मविदः नियतकाले देहं त्यक्त्वा परमां गतिं यान्ति। वेदेषु यज्ञेषु दानेषु च यत् पुण्यफलं प्रदिष्टं इदं विदित्वा योगी सर्वं तदत्येति।

## पाठः ९

श्रीभगवान् आह:—अनसूयवे भवते इदं ज्ञानं अध्यात्मविषयकं प्रवक्ष्ये। तथैव विज्ञानं विश्वविषयकं च समं वदामि। इदं गुह्यतमं अनेन ज्ञानेन साधकः अशुभात् मोक्ष्यते। लोके राजविद्या इति प्रथितम् प्रत्यक्षावगमञ्च आचरणे सुलभमपि। इदं ज्ञानं अश्रद्दधानाः मानवाः मां न प्राप्नुवन्ति। मृत्युसंसारवर्त्मनि लुठन्ति। इदं विश्वं मया व्याप्तम्। सर्वाणि भूतानि मयि तिष्ठन्ति। नाहं तेषु तिष्ठामि। मम ऐश्वरं योगं पश्य। ममात्मा भूतभावनः, भूतभृत् न च भूतस्थः। महान् वायुः आकाशे स्थितः नित्यं यथा

सर्वत्रगः तथा मत्स्थानि भूतानि इति अवधारय। कल्पक्षये सर्वभूतानि ॰ प्रकृतिं यन्ति। कल्पादौ सृष्टिकाले अहमेव तान् पुनः सृजामि। अहं कृत्स्नं भू ग्रामं सृजामि। इदं सृष्टिप्रलयरूपं कर्म मां न बध्नाति। तेषु कर्मसु अ उदासीनवत् वर्ते।

मम आध्यक्ष्ये प्रकृतिः चराचरं जगत् सूयते अनेन हेतुना जगत् स परिवर्तते। लोके केचन मोघाशा भवन्ति। अन्ये मोघकर्माणः। अपरे मोघ ज्ञानाः। अत एव विचेतसः भविष्यन्ति। कुतः ? ते न खलु मम उत्तमं परं भावं जानन्ति। एते राजसीं आसुरीं च मोहिनीं प्रकृतिं श्रिताः। ये दै प्रकृतिमाश्रिताः ते पुनः मां अव्ययं अनन्यमनसा भजन्ति। कीर्तयन्ति, नम स्यन्ति, भक्त्या सततं यतन्तः नित्ययुक्ताः उपासन्ते। एके ज्ञानयज्ञेन यजन्त मां उपासन्ते। एकत्वेन पृथक्त्वेन च विश्वतोमुखः अहं वर्ते। यज्ञ औषधयः मन्त्रादिरूपः अहमेव। ऋक्, साम, यजूंषिः ओंकारं च मामवेहि भर्ता लोकानां गतिश्च, भूतानां सृष्टिप्रलययोः निदानं च मां विद्धि। अहमे तपामि निगृण्हामि, उत्सृजामि। सत् असत् च अहमेव इति जानीहि।

मां त्रैविद्याः यज्ञैः इष्ट्वा स्वर्गतिं प्रार्थयन्ते। ते स्वर्गसुखमनुभूय क्षी पुण्ये पुनः मर्त्यलोकं विशन्ति। एवं त्रयीधर्मं प्रपन्नाः गतागतं लभन्ते कामकामाः। येपुनरनन्यमनसः चिन्तयन्तः मां उपासन्ते तेषां नित्याभियुक्तानां अहं योगक्षेमं वहामि। ईदृशभावनावन्तः अन्यदेवताभक्ता अपि मामे यजन्ते;-परन्तु अविधिपूर्वकं भवति। अहमेव सर्वकर्मणां प्रभुः भोक्ता च ये मां तत्वतः न जानन्ति अतःते च्यवन्ते। देवव्रताःदेवान्, भूतेज्याः भूता मद्याजिनः मां च प्राप्नुवन्ति। पत्रं पुष्पं फलं वा प्रयतात्मना अर्पितं आद्रिये तस्मात् यत् करोषि, यदश्नासि, यज्जुहोषि, यत् ददासि तत् सर्वं मदर्पणं कुरु एवं सर्वकर्माणां शुभाशुभ फलैः मोक्ष्यसे अनेन प्रकारेण सन्न्यासयोगयुक्तो भव सर्वेषु भूतेषु मे प्रियोपि नास्ति, द्वेष्योपि नास्ति। ये भक्त्या मां भजन्ते, ते मयि वर्तन्ते, अहमपि तेषु वर्ते।

साधकः सम्यग्व्यवसितः अनन्यभाक् मां भजते सः दुराचारोपि साधुरेवेति मन्तव्यः। सः क्षिप्रं धर्मात्मा भवति। शान्तिं शश्वदभिगच्छति। मम भक्ताः न प्रणश्यन्ति। मामुपाश्रित्य स्त्रियः, वैश्याः, शूद्राः, अन्ये पापयोनयः परां गतिं यान्ति; किं पुनर्योग्याः? अतः मां त्वं भजस्व। मद्याजी, मत्परायणः, मन्मनाः मद्भक्तो भव। तदा मां उपैष्यसि।

---

## पाठः १०

अहं तव हितकाम्यया प्रीयमाणाय परमं वचः वक्ष्ये। त्वं श्रुणु देवानां ऋषीणां च अहमेव आदिः। ते इमं विषयं न जानन्ति। यो मां अजं अनादिं च वेत्ति, सः मर्त्येषु असम्मूढः भवति। मत्त एव बुद्धिमारभ्य दानादयो विंशतिगुणाः पृथग्विधा भवन्ति। पूर्वस्मिन् काले मद्भावाः, सप्तर्षयः, चत्वारो मनवः, मम मानसात् जाताः। अयं लोकः तेषामेव सन्ततिः। यः एतां विभूतिं योगं च वेत्ति सः योगेन युज्यते। बुधाः भावसमन्विताः मां सर्वसृष्टिसंहारनिदानं भजन्ते। मच्चित्ताः, मद्गतप्राणाः, परस्परं बोधयन्ति। कथयन्ति, तेन तुष्यन्ति रमन्ते च। प्रीतिपूर्वकं एवं भजतां सततयुक्तानां बुद्धियोगं ददामि। तेन ते मां प्राप्नुवन्ति। तेषु अनुकम्पया आत्मभावस्थः अज्ञानजं तमः नाशयामि।

अर्जुन उवाच :—"हे भगवन् यद्यपि त्वं परतत्वं इति देवाः, दानवाः नारदादयो ऋषयश्च वदन्ति। त्वमपि एवं ब्रवीषि सर्वमेतत् ऋतं मन्ये तथापि केपि त्वां न विदुः। त्वं आत्मना आत्मानं वेत्थ। अतः आत्मविभूतयः दिव्याः कथय "केषु केषु भावेषु त्वां चिन्तयन् ज्ञास्ये। आत्मनः भूतिं योगञ्च कथय। श्रुण्वतः मे तृप्तिः नास्ति" इति।

भगवानाह :— "हन्त आत्मविभूतीः कथयिष्यामि अहं सर्व भू
शयस्थितः, आदिः अन्तश्च, किं बहुना मया विना न किंचिदप्यस्ति
चरेषु। तेषां अनन्तत्वात् केवलं उद्देशतः प्रोक्तः। यद्यत् सत्वं विभूति
श्रीमत् ऊर्जितं च तत्सर्वं मम अंशसंभवमिति अवगच्छ।

अहमेव विश्वं विष्टभ्य एकांशेन स्थितोस्मि।

## पाठः ११

अर्जुन उवाच :—" हे कृष्ण मदनुग्रहाय कृपया अध्यात्मसंज्ञितं
भवता उपदिष्टम्। अनेन मे मोहः नष्टः। सृष्टिप्रलयविषयौ श्रुतौ तव
परमात्मनः माहात्म्यमपि श्रुतम्। त्वदुक्तं सर्वमपि सत्यमेव। परन्तु ते
द्रष्टुमर्हं यदि मन्यसे अव्ययं आत्मनो रूपं दर्शय" इति।

श्रीभगवान् आह :— "पार्थ! मे रूपाणि शतशः सहस्रशश्च पश्
अदृष्टपूर्वाणि आश्चर्याणि पश्य। नानावर्णानि दिव्यानि, नाना आकृतीनि
चराचरं कृत्स्नं एकस्थं मम देहे निरीक्षय। यच्च अन्यत् द्रष्टुमिच्छसि
द्रक्ष्यसि। अनेन चर्मचक्षुषा भवान् द्रष्टुम् न शक्नोषि। अतः दिव्यं च
ददामि। एवं भगवान् उक्त्वा अर्जुनाय ऐश्वरं रूपं अनन्तं आश्चर्यं विश्वतो
दर्शयामास। सूर्यसहस्रस्य युगपदुत्थित इव प्रकाशः समवर्तत। देवदेव
शरीरे कृत्स्नं एकस्थं विश्वरूपं अर्जुनः ददर्श। ततो विस्मयाविष्टः, हृष्टो
कृताञ्जलिः अभाषत। हे देव! तव देहे सर्वान् देवान् पश्यामि। शङ्ख
गदादीन् दिव्यायुधान् पश्यामि। इदं अद्भुतं रूपं दृष्ट्वा लोकं सर्वं व्यथित
पश्यामि। केचन ऋषयः त्वां स्तुवन्ति। अन्ये भीताः प्रांजलयः गृणन्ति

अपरे गन्धर्वादयः विस्मिताः। अहमपि प्रव्यथितात्मा शमं न विन्दामि, दिशः न जाने, शर्म न लभे।

अमी कौरवा भीष्मादिभिः, अस्मदीयैः योधमुख्यैः अन्यैः अवनिपाल संघैश्च सह ते भयानकानि वक्त्राणि प्रविशन्ति मध्ये एव केचन चूर्णितोत्तमाङ्गाश्च। यथा नदीनां अम्बुवेगाः समुद्रमभिद्रवन्ति तथैव नरलोकवीराः तव वक्त्राणि अभिविशन्ति। को भवान्? उग्ररूपोसि मे आख्याहि। तव प्रवृत्तिम् न जानामि। विज्ञातुमिच्छामि।

श्री भगवान् आह :—प्रवृद्धः लोकक्षयकृत् कालः अस्मि। इह लोकान् समाहर्तुं प्रवृत्तः। ये योधाः प्रत्यनीकेषु वर्तन्ते ते त्वां ऋतेऽपि न भविष्यन्ति। तस्मात् त्वं उत्तिष्ठ। यशो लभस्व। शत्रून् जित्वा समृद्धं राज्यं भुङ्क्ष्व एते सर्वे योधाः मयैव पूर्वमेव निहताः। त्वं केवलं निमित्तमात्रं भव। भीष्मादीन् मया हतानेव जहि। माव्यथिष्ठाः युध्यस्व रणे सपत्नान् जेतासि। एतच्छ्रुत्वा वेपमानः अर्जुनः भीतः प्रणम्य भूयः कृष्णमाह :—"भगवन् तवप्रकीर्त्या जगत् हृष्यति, अनुरज्यति च त्वं आदिदेवः वेत्ता वेद्यंचासि। त्वं सर्वं समाप्नोषि।

मया तव महिमानं अजानता बहुधा विहारे, शय्यासु आसने भोजनेषु च असत्कृतोऽसि। अतः अप्रमेयं अस्मिन् विषये क्षमां याचे। चराचरस्य लोकस्य पितासि। त्वत्समो नास्ति। अभ्यधिकः कुतः स्यात्। तस्मात् कायं प्रणिधाय प्रसादये। पिता पुत्रं, सखा सखायं, प्रियां प्रियश्च यथा तथा देव मां सोढुं अर्हसि। अदृष्टपूर्वं विश्वरूपं दृष्ट्वा हृष्टोस्मि। मे मनः भयेन प्रव्यथितम्। तदेव पूर्वाभ्यस्तरूपं दर्शय, प्रसीद इति।

प्रसन्नो भगवानाह :—प्रसन्नेन मया अन्यैः अदृष्टपूर्वं तुभ्यं रूपं आत्मयोगात् दर्शितम्। वेदयज्ञाध्ययनैर्वा दानैर्वा क्रियाभिः उग्रैः तपोभिर्वा त्वदन्येन अनेन रूपेण न दृष्टः। ते व्यथा मा भूत्। प्रीतमनाः व्यपेतभीः भव।

मे पूर्वाभ्यस्तं रूपमेव पश्य। एवं कृष्णः सौम्यं रूपं दर्शयामास। भीतं अर्जुनं आश्वासयामास च अर्जुनोपि सचेताः प्रकृतिं गतोस्मीति न्यवेदयत्। भगवानाह अर्जुन देवा अपि दुर्दर्शं इदं रूपं नित्यं दर्शनकांक्षिणः वर्तन्ते। वेदैर्वा तपोभिर्वा एवं विधं मां द्रष्टुं न शक्यते। अनन्यया भक्त्या ज्ञातुं द्रष्टुं च शक्यते। तस्मात् त्वं मत्कर्मकृत् मत्परमः भूयाः। संगवर्जितः निर्वैरो भव। अन्ततः परां गतिं आप्नोषि।

## पाठः १२

अनन्तरं अर्जुनः पप्रच्छ। एतावत् पर्यन्तम् भवदुक्तप्रकारेण ये भक्ता त्वां पर्युपासते ये च अक्षरं अव्यक्तं च उपासते तेषां योगवित्तमाः के ? इति।

भगवान् आह :— मयि मनः आवेश्य नित्ययुक्ताः ये उपासते परमया श्रद्धया उपेताः ते योगवित्तमाः। ये पुनः इन्द्रियग्रामं संयम्य सर्वत्र समबुद्धयः अक्षरं अचिन्त्यं अव्यक्तं सर्वत्रगं अचलं पर्युपासते यदि ते सर्वभूतहितेरताः तेपि मां प्राप्नुवन्ति। अयमत्र भेदः, अव्यक्तासक्तचेतसां क्लेशः अधिकतरो भवति। मनः मयि आधत्स्व। बुद्धिं मयि निवेशय। अतऊर्ध्वं मय्येव निवसिष्यसि। द्वितीयपर्वस्तु यदि चित्तं मयि समाधातुं न शक्नोषि ततः अभ्यासयोगेन मामाप्तुमिच्छ। तृतीयपर्वस्तु यदि अभ्यासेपि असमर्थः मत्कर्मपरमो भव। एतस्मिन्नपि अशक्तः चेत् सर्वकर्मफलं यतात्मा त्यज। क्रमविवेचने ज्ञानं श्रेयः, ज्ञानात् ध्यानं विशिष्यते। एतदपेक्षया कर्मफलत्यागः अस्मात् शान्तिः सिध्यति। साधकः आदौ वक्ष्यमाणप्रकारेण आत्मगुणान् अभिवर्धयेत्। ... ततः सर्वेषु ...मुपचाय-

येत्। अनन्तरं निर्ममः निरहंकारश्च भूयात्। क्षमावान् सुखे दुःखे समत्वं अभ्यसेत् सततं सन्तुष्टः आसीत यतात्मा दृढनिश्चयश्च। भगवति अर्पित मनोबुद्धिः भक्तः ईश्वरप्रीत्यै प्रभवति।

लोकः यस्मात् नोद्विजते, लोकव्यवहारेण च यः नोद्विजते तथैव हर्षामर्षभयोद्वेगाः यं नास्कन्दन्ति स वरिष्ठः साधकः। अनपेक्षः शुचिः दक्षः उदासीनः गतव्यथश्च भवेत्। यः न हृष्यति अभ्युदये, अलाभादि परिस्थितिषु न शोचति न विषादं याति कामनाभिः नाक्रम्यते एवं शुभाशुभ परित्यागेन सः भक्तिमान् भवति।

शत्रौ, मित्रे, मानापमानयोः शीतोष्णयोः सुखदुःखयोः, निन्दास्तुत्योः समः यः, सः स्थिरमतिः भक्तः इति उच्यते। ये इदं धर्मामृतं अनन्तफलदं आचरणीयं ज्ञानं उक्तप्रकारेण पर्युपासते श्रद्धधानाः ते भक्ताः भवन्ति।

## पाठः १३

कौन्तेय इदं शरीरं क्षेत्रं इत्यभिधीयते। यः एतत् वेत्ति तं क्षेत्रज्ञ इति तद्विदः आहुः। मां पुनः सर्वक्षेत्रेषु क्षेत्रज्ञं विद्धि। ज्ञानं नाम तत् क्षेत्र क्षेत्रज्ञयोः स्वरूपं स्वभावं च यः सुविशदमाकलयतीति मम मतम्। इदानीं तत्क्षेत्रं यत् यादृक्, यद्विकारि, यतउत्पन्नं यत्प्रभावः तस्य कारणभूतः इत्यादिकं समासेन वक्ष्ये। त्वं शृणु। अयं विषयः ऋषिभि बहुधा गीतः। विविधैः छन्दोभिः पृथक् पृथक् रूपेण निरूपितः हेतुमद्भिः ब्रह्मसूत्रपदैश्चनिश्चितः वर्तते।

पञ्चमहाभूतानि, अहंकारः बुद्धिः, अव्यक्तम्, पञ्चज्ञानेन्द्रियाणि मनश्च आहत्य एकादश भवन्ति। इन्द्रियगोचराः पञ्चविषयाः, पुनः इच्छा, द्वेषः,

सुखं, दुःखं, संघातः, चेतना, धृतिः, एतेषां समवायः समासेन "सविकारं क्षेत्रं" इत्युदाहृतम् ।

अमानित्वं, अदंभित्वं, अहिंसा, क्षान्तिः, आर्जवं, आचार्योपासनं, शौचं, स्थैर्यं, आत्मविनिग्रहः, वैराग्यं इन्द्रियार्थेषु, अहंकाररहित्यं, जन्मनः मृत्योः, जरायाः, व्याधेः दोषाणां च अनुदर्शनं, पुत्रदारगृहादिषु असक्तिः, अनभिष्वंगश्च इष्टानिष्टोपपत्तिषु, नित्यं समाहितत्वम्, मयि अनन्ययोगेन भक्तिः अव्यभिचारिणी स्यात् । जनसंसदि अरतिः, विविक्तदेशसेवित्वं, अध्यात्मज्ञाने नित्यमासक्तिः, तत्वज्ञानानां दर्शनं, एतत् सर्वं ज्ञानमुच्यते। अथ ज्ञेयं उपपादयामि । यत् ज्ञात्वा अमृतं अश्नुते परं ब्रह्म अनादिः अस्ति । तन्न सत् नचा असत् इति उच्यते । तत् ब्रह्म सर्वतः पाणिपादं, सर्वतः अक्षिशिरोमुखं, सर्वतः श्रुतिमत् लोके सर्वमावृत्य तिष्ठति ।

सर्वेषामिन्द्रियाणां गुणानां प्रकाशने हेतुः अपि सर्वैरपि इन्द्रियैर्वर्जितम्। असक्तमपि सर्वभृत् वर्तते । निर्गुणमपि गुणभोक्तृ राजते । इदं परं ब्रह्म भूतानां बहिरन्तश्च विद्यते । तदेव दूरे अन्तिके च वर्तते । सूक्ष्मत्वात् अज्ञेयम्। अविभक्तमपि भूतेषु विभक्तमिवास्थितम् । ग्रसिष्णुरपि प्रभविष्णुः । तत् ज्योतिषामपि ज्योतिः भ्राजते । तमसः परमित्युच्यते । इदं तत्वं ज्ञानमपि भवति । सर्वस्य हृदि विष्टितं ज्ञानगम्यं च भवति । एवं मया तुभ्यं ज्ञानं, ज्ञेयं, क्षेत्रं, च समासतः प्रतिपादितम् । मद्भक्तः एतद्विज्ञाय मद्भावाय उपपद्यते ।

प्रकृतिं पुरुषञ्च अनादी इति विद्धि । विकारान् गुणांश्च प्रकृतिसंभवान् विद्धि । कार्यकारणभावेषु कर्तृत्वे च प्रकृतिः हेतुः उच्यते । सुखदुःखानां भोक्तृत्वे पुरुषः हेतुरुच्यते । प्रकृतिस्थः पुरुषः प्रकृतिजान् गुणान् भुङ्क्ते । अस्य पुरुषस्य सदसद्योनिजन्मसु कारणं प्रकृतेः गुणैः सह संगः ।

अस्मिन् शरीरे अनुमन्ता, उपद्रष्टा, भर्ता, भोक्ता, महेश्वरः परमात्मा इति च पुरुषः उक्तः। यः एवं प्रकृतिं गुणैस्सह पुरुषं वेत्ति, यथावत् तस्य स्वरूपं स्वभावं च सः सर्वथा वर्तमानोपि पुनः न जायते।

केचन ध्यानेन आत्मनि आत्मानं पश्यंति। अन्ये सांख्येन योगेन पश्यन्ति। अपरे कर्म योगेन द्रक्ष्यन्ति। केचन एवं आत्मानं द्रष्टुं असमर्थाः भवन्ति। ते पुनः अन्येभ्यः तत्वविद्भ्यः श्रुत्वा उपासते। तेपि च श्रुति परायणाः मृत्युं तरन्ति।

स्थावरं वा जंगमं वा इह जगति यत् किंचित् सत्वं जायते। तत् क्षेत्र क्षेत्रज्ञयोः प्रकृति-पुरुषयोः संयोगादेवेति विद्धि। यः सर्वभूतेषु तिष्ठन्तं, विनश्यत्सु अविनश्यन्तं परमेश्वरं पश्यति सः तत्वं पश्यति। सर्वत्र समवस्थितं ईश्वरं समं पश्यन् आत्मना आत्मानं न हिनस्ति। ततः परां गतिं याति सर्वशः क्रियमाणानि कर्माणि प्रकृत्यैव क्रियमाणानि इति यः पश्यति सः आत्मानं अकर्तारं पश्यति।

यथा पृथग्भावान् एकस्थान् पश्यति तत एव तस्य विस्तारं ब्रह्म तदा-संपद्यते। अयं अनादिः निर्गुणः, अव्ययः परमात्मा शरीरस्थोपि न करोति न लिप्यते। यथा आकाशं सर्वगतमपि सौक्ष्म्यात् पदार्थेषु नोपलिप्यते तथा सर्वत्रावस्थितो देही नोपलिप्यते। यथा रविः एकः इमं कृत्स्नं लोकं प्रकाश-यति क्षेत्री तथैव कृत्स्नं क्षेत्रं प्रकाशयति। एवं ज्ञानचक्षुषा क्षेत्रक्षेत्रज्ञयोः अन्तरं, भूतप्रकृतिमोक्षं च ये विदुः ते परं यान्ति।

## पाठः १४

भूयः ज्ञानानां उत्तमं परं ज्ञानं वक्ष्यामि। यत् ज्ञात्वा सर्वे मुनयः परां सिद्धिं गताः ये इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ते सर्गेऽपि नोपजायन्ते तथैव प्रलये न व्यथन्ति च। इयं प्रकृतिः ब्रह्मशब्देनापि उच्यते। सा मम योनिः। अस्यामहं गर्भं दधामि। अनेन सर्वेषां भूतानां संभवो भवति। सर्वयोनिषु याः मूर्तयः शरीराणि संभवन्ति तासामहं बीजप्रदः पिता चास्मि। प्रकृतिसंभवाः गुणाः त्रयः वर्तन्ते सत्त्वं, रजः, तमः, इति। एते देहिनं अव्ययमपि निबध्नन्ति (१) सत्त्वं, निर्मलत्वात् प्रकाशकं अनामयं च। अयं देहिनं सुखसंगेन बध्नाति तथा ज्ञानसंगेन च। (२) तृष्णा संगेन समुद्भूतं रागात्मकं रजः। इदं देहिनं कर्मसंगेन बध्नाति। (३) अज्ञानजं सर्वदेहिनां मोहनं तमः। तत्तु प्रमाद, आलस्य निद्राभिः बध्नाति।

क्रमशः सत्त्वं सुखे, रजः कर्मणि, ज्ञानमावृत्य तमः प्रमादे च संजयति। रजस्तमश्चाभिभूय सत्त्वं प्रभवति। रजः सत्त्वं च अभिभूय तमः। एवमेव तमः सत्त्वं च अभिभूय रजः प्रभवति। यदा सर्वेषु इन्द्रियद्वारेषु प्रकाशः अनुभूयते तदा सत्त्वं विवृद्धं विद्यात्। यदातु रजसः विवृद्धिः तदा लोभः प्रवृत्तिः, आरंभः कर्मणां, अशमः स्पृहा च भोभवीति। तमसि विवृद्धे अप्रकाशः अप्रवृत्तिः प्रमादः मोहश्च प्रभवन्ति। एवं जीवनयात्रायां त्र्यो गुणाः आवश्यकाः प्रतिष्ठिताश्च।

यदातु सत्वविवृद्धः तस्मिन् समये देही प्रलयं याति चेत् देहभृत् उत्तमविदान् लोकान् प्रतिपद्यते। रजसि पुनः कर्मसंगिषु जायते। तमसि प्रलयं गतः मूढयोनिषु जायते। इहलोके परत्र च सुकृतस्य कर्मणः निर्मलं सात्विकं फलं, दुःखं रजसः फलं, अज्ञानं तमसः फलम्। सत्वात् ज्ञानं, रजसः लोभः, तमसः प्रमादमोहौ च भवन्ति।

मराणानन्तरं सत्वस्थाः ऊर्ध्वं गच्छन्ति । राजसाः मध्ये तिष्ठन्ति । तामसाः अधोगच्छन्ति सर्वेषां व्यापाराणां कर्तारः गुणा इति यदा साधकः अधिगच्छति, तथैव स्वात्मानं गुणेभ्यः भिन्नं वेत्ति, सः मद्भावमाप्नोति । देही देहसमुद्भवान् एतान् त्रीन् गुणान् अतीत्य जन्ममृत्यू जरामरणदुःखैश्च विमुक्तः अमृतं अश्नुते ।

अर्जुनः पृच्छति "कैः लिंगैः मानवः एतान् त्रीन् गुणान् अतीतः भवति ? किमाचारः पुरुषः त्रीन् गुणान् एतान् अतिवर्तते ? इति ।

भगवान् आह :—तस्य साम्यावस्थां वर्णयामि । तादृशः साधकः प्रकाशं प्रवृत्तिं मोहं वा निवृत्तं संप्रवृत्तं वा न द्वेष्टि न वा कांक्षति । उदासीनवदासीनः सन् गुणानां अभिभवप्रादुर्भावैः न विचाल्यते । यः एवं अवतिष्ठति सः नेंगते अत एव समदुःखसुखः सन् स्वस्थो भवति । लोष्टे, अश्मनि, काञ्चने च समभावनया वर्तते प्रियाप्रिययोश्च धीः तस्य समाना राजते निन्दायां संस्तुतौ च । एवं रीत्या सिध्दावस्थामापन्नस्य माने, अपमाने, मित्राणां, शत्रुपक्षेऽपि, तुल्यता सिध्यति । एवं भूतः सर्वारंभपरित्यागी गुणातीतः इत्युच्यते ।

गुणतीतभावनया सिद्धः साधकः अव्यभिचरितेन भक्तियोगेन मां सेवते सः एतान् गुणान् सर्वात्मना अतीत्य ब्रह्मभूयाय कल्पते । अहंब्रह्मणः प्रतिष्ठाभूतः । तदेव ब्रह्म अमृतं, अव्ययं शाश्वतस्य धर्मस्य ऐकान्तिकस्य-सुखस्य आधारभूमिः ।

# पाठः १५

अत्र प्रथमं विश्वं वृक्षरूपेणनिरूपयति। इदं विश्वं अश्वत्थरूपेण अव. गन्तुं शक्यते। यस्य मूलं ऊर्ध्वलोके अस्ति। शाखाः अधः प्रसृताः। एषो अश्वत्थः सनातनः अस्य पर्णानि एव छन्दांसि। यः एवं वेद सः वेदवित्।

पुनः अस्य शाखाः अधश्च उर्ध्वं च प्रसृताः वर्तन्ते। ताः गुणप्रवृद्धाः विषयप्रवालाश्च मनुष्यलोके कर्मानुबन्धीनि मूलानि अनुसन्ततानि। अस्यरूपं न उपलभ्यते। अन्तो वा आदिर्वा संप्रतिष्ठा वा नावधार्यते। एनं अश्वत्थं सुविरूढमूलं असंगेन दृढेन शस्त्रेण छेत्तव्यम्। ततः यस्मिन् गता साधकाः ननिवर्तन्ते। तत्पदं परिमार्गितव्यम् यतः पुराणी प्रवृत्ता प्रसृतिः तं आद्यं पुरुषं प्रपद्ये।

तत्र शशांको वा सूर्यो वा न भासते पावकोपि। यद्गत्वा न कदापि निवर्तन्ते तत् परमं मम धाम अस्ति। जीवलोके जीवभूतः अयं देहात् देहान्तरं गच्छन् प्रकृतिस्थानि मनसा सह षट् संख्याकानि इन्द्रियाणि कर्षति।

आश्रयात् वायुः गन्धानिव एतानि इन्द्रियाणि अयमीश्वरः गृहीत्वा संयाति। अयं जीवात्मा पुनः श्रोत्रं, चक्षुः, स्पर्शनं रसनां, घ्राणं च अधिष्ठाय विषयानुपसेवते। विमूढाः एनं उत्क्रामन्तं स्थितं भुंजानं वापि गुणान्वितं नानुपश्यन्ति। ज्ञानचक्षुषस्तु पश्यन्ति। योगिनः यतन्तः ईदृशं एनं सम्यक् पश्यन्ति। अकृतात्मानो अचेतसः यतन्तोपि एवमवस्थितं न पश्यन्ति।

यथादित्यगतं तेजः जगदखिलं भासयते यच्चाग्नौ दृश्यते यच्चन्द्रमसि तत् सर्वं तेजः मामकं विद्धि। अहमोजसा गां आविश्य भूतानि धारयामि। रसात्मकः सोमो भूत्वा ओषधीः पुष्णामि। अहमेव वैश्वानरो भूत्वा प्राणिनां देह

माश्रितस्सन् प्राणापानसमायुक्तः चतुर्विधं अन्नं पचामि। अहं सर्वस्यान्तः हृदि सन्निविष्टोऽस्मि। मत्त एव सर्वं प्रवर्तते। सर्वैरपि वेदैः अहमेव वेद्यः। वेदवित् वेदान्त कृच्चाहमेव।

क्षरश्च अक्षरश्च इमौ द्वौ पुरुषौ भवतः। तत्रक्षरो नाम सर्वाणि भूतानि भवन्ति। कूटस्थः अक्षर इति उच्यते। एताभ्यामन्यः पुरुषः पुरुषोत्तमः इत्युदाहृतः। सः अव्ययः ईश्वरः लोकत्रयमाविश्य बिभर्ति। अहं पुनः क्षरं अतीतः अक्षरमप्यतीतः अत एव उत्तमः! तस्मात् लोके वेदे च "पुरुषोत्तमः" इति प्रथितोऽस्मि। यः स्वयमसंमूढः मां एवं जानाति सः सर्ववित् सर्वभावेन मां भजति। इतीदं गुह्यतमं शास्त्रं भवते उक्तम्। एतत् बुध्वा बुद्धिमान् कृतकृत्यश्च भवति।

## पाठः १६

श्रीभगवानुवाच :—मानवः विश्वविज्ञानादनन्तरं स्वात्मानं विजानीयात्। स्वयं कथंभूतः इति जिज्ञासेत्। तत्र प्राधान्येन द्वयी गतिः वर्तते। सा स्वभावानुसारेण अभिव्यज्यते। तां अभिज्ञाः दैवीसंपत् आसुरी संपदिति च वर्णयन्ति। तत्र दैवीसंपत् मानवे अनेकमुखैः अभिव्यज्यते। ततः सुखेन बोद्धुं शक्यते। कर्तव्येषु कर्मनिर्वहणेषु अभयम्, सर्वदा निर्मलमनस्कत्वं, भावनासु रागद्वेष राहित्यं, चिदात्मकानुसन्धानरूपे ज्ञानयोगे व्यवस्थितिः, युक्ते काले देशे, पात्रे च दानं, बाह्येन्द्रियाणां यथासमयं निग्रहः, कर्मणां निर्वर्तने ममताराहित्यं, तपः, अध्येतव्यानां स्वाध्यायः स्वीयज्ञानशक्तेः वीर्यतरत्वापादनं, व्यवहारेषु ऋजुमार्गानुयायित्वम्, कायेन, वाचा मनसा च हिंसानिवृत्तिः सत्ये

श्रद्धा, क्रोधात् विरतिः, त्यागः तथा शान्तिः, लोभवर्जनं, भूतेषु दया, अ-
सक्तिः, मृदुभावना, ह्रीः, व्यवहारेषु चपलविरतिः तेजः, क्षमा, धृ-
अनभिमानित्वंचेत्यादयः गुणाः दैवीसंपदि मुख्याः सन्ति ।

आसुरीं संपदं वर्णयामि । दम्भः, दर्पः, अभिमानः, क्रोधः, पारुष्यं
अज्ञानं च आसुरीसंपदमभिजातानां गुणा अभिव्यज्यन्ते ।

दैवीसंपत् मानवानां विमोक्षाय, बन्धनिवृत्त्यै च प्रभवति । आसुरीसंप-
बन्धाय भवति । अर्जुन ! त्वं दैवीसंपदमभिजातोसि मा शुचः । एवं दैवी
संपदमधिकृत्य तुभ्यं विस्तरशः प्रोक्तम् । इदानीं आसुरीं संपदमभिवर्णयामि
त्वं श्रुणु इति भगवानाह । आसुरसंपदा युक्ताः प्रवृत्तिं न जानन्ति न नि-
वृत्तिम् । तेषु शौचं नास्ति आचारोपि न विद्यते सत्यं तैः दूरतः त्यज्यते
जगद्विषये च तेषामाशयःविपरीतः वरीवर्ति । इदं जगत् असत्यं अनीश-
अप्रतिष्ठं इत्यादि रूपेण व्याख्यास्यन्ति । तथैव इदं सर्वं अपरस्परसंभूतं एत-
सर्वं कामहैतुकमिति च सिध्दान्तयन्ति । ईदृग्भिः भावनाभिः नष्टात्मान
अल्पबुद्धयः भविष्यन्ति ततः जगतः अहिताय क्षयाय च उग्रकर्माणो भवन्ति ।
दम्भमानमदान्विताः दुष्पूरं कामं आश्रयन्ति । अत एव अशुचिव्रताः । अज्ञा-
नात् दुष्कर्माणि आचरन्ति । कामोपभोगपरमाः एतावदेवेति विश्वसन्ति
परन्तु अपरिमेयां प्रलयान्तां चिन्तामाश्रयन्ति । आशापाशशतैः बद्धाः अन्या-
य्येन अर्थसंचयानीहन्ते ।

अद्य मया इदं लब्धम् । आयत्यां इमं मनोरथं आप्स्ये । इदानीं एता-
वदस्ति । इयद्धनं उत्तरत्र भविष्यति । अयं शत्रुः मयाहतः । इतरानपि
हनिष्ये । अहं ईश्वरः, भोगी, सिद्धः, बलवान् यक्ष्ये, दास्यामि मोदिष्ये
अहमाढ्यः, अभिजनवानस्मि । मया सदृशः कः अन्योस्ति इत्यादिभिः विभ्र-
भमाणाभिः भावनाभिः मुह्यन्ति । एवमनेकचित्तविभ्रान्ताः मोहजाले
समावृताः स्युः । एते अशुचौ नरके पतन्ति ईदृशः पुरुषाः केवलमात्मसं-
भाविताः अहंकारेण नामयज्ञैः यजन्ते । तदपि अविधिपूर्वकम् ।

किं च अहंकारं, बलं, दर्पं, कामं, क्रोधं च संश्रिताः भवन्ति। स्वात्म-देहे परदेहेषु च विद्यमानं परमात्मानं प्रद्विषन्ति असूयया। तानहं क्रूरान् आसुरीषु योनिषु क्षिपामि। आसुरीं योनिमापन्नाः जन्मनि जन्मनि मूढाः भवन्ति। ततः मां अप्राप्य अधमां गतिं यान्ति। कामः, क्रोधः लोभः, इति त्रिविधं नरकद्वारं आत्मनः नाशकं अस्ति। तस्मात् एतानि धर्मविरुद्धानि त्यक्तव्यानि भवन्ति। साधकः एतैः त्रिभिः तमोद्वारैः विमुक्तः आत्मनः श्रेयः आचरति ततः परां गतिं याति। यः कामकारतः शास्त्रविधिमुत्सृज्य वर्तते सः कर्मसु सिद्धिं नाधिगच्छति। इह सुखं च न विन्दति। तथैव अन्ते परां गतिमपि न प्राप्नोति। तस्मात् कार्याकार्यव्यवस्थितौ ते शास्त्रं प्रमाणं भवितुमर्हति। शास्त्रविधानेन ज्ञात्वा इह कर्म कर्तुमर्हसि।

## पाठः १७

अर्जुन आह:—"ये शास्त्रं न जानन्ति परन्तु श्रद्धया यजन्ते तेषां निष्ठा कीदृशी भविष्यति? तेषां निष्ठा किं राजसी, तामसी, सात्विकी वा? इति।

भगवानाह। मानवस्य भावना ज्ञानरूपा निष्ठा इत्युच्यते। सैव तस्यां अन्विता श्रद्धा भवति। ताः स्वभावजाः सात्विकी, राजसी, तामसी, इति उच्यन्ते। ताः प्रत्येकं वर्णयामि। शृणु:— श्रद्धा पुनः सर्वथापि सत्वं अनुसरति। सत्वंनाम अन्तःकरणम्। तदेव मन इत्युच्यते। पुरुषः नियमेन श्रद्धामयः भवति। यः मानवः यां श्रद्धां आभिव्यक्तीकरोति तादृशमाहुः जनाः। अतः मानवस्य स्वभावेन तस्य श्रद्धा अनुमीयते।

सात्विकश्रद्धया जनाः देवान् यजन्ते । राजसश्रद्धावन्तः यक्षान् राक्षसांश्च यजन्ते । तामसश्रद्धावन्तः प्रेतान् भूतगणांश्च यजन्ते अयं सामान्योद्देशः त्रिसृणामपि ।

तत्र आसुरनिश्चयान् वर्णयामि । ते अशास्त्रविहितं घोरं तपः तप्यन्ते । कामरागबलेन अन्विताश्च भवन्ति । दंभेन अहंकारेण च मुह्यन्ति । ते मूढ-ग्राहेण अचेतसः भवन्ति । इदं शरीरं भूतग्रामरूपं वर्तते । तत् पीडयन्ति । अनेन अन्तस्थितं मांच पीडयन्ति । एते आसुरानिश्चयाः स्वपरयोरपि क्लेशाय यतन्ते । मानवानां श्रद्धा वक्ष्यमाणैः चतुर्भिः परिशीलनैः ज्ञायते । तेषां आहारः, यज्ञः, तपः, दानं, च त्रिविधः प्रियो भवति ।

सात्विकस्य आहाराः सामान्येन रस्याः, स्निग्धाः, स्थिराः, हृद्याः प्रिया भवन्ति । इमे आयुः, सत्वं, बलं, आरोग्यं, सुखं, प्रीतिं च वर्धयन्ति । एतेषां यज्ञाः पुनः विधिदृष्टा स्युः । मनः समाधाय यष्टव्यमित्येव यजन्ते ।

तपस्तु त्रिविधं भवति वाचिकं, मानसिकं, कायिकं इति देवानां द्विजानां, प्राज्ञानां शौचं आर्जवं ब्रह्मचर्यं अहिंसा च शारीरं तप उच्यते । सत्यं, हितं, प्रियं, अनुद्वेगकरं च यद्वाक्यं, स्वाध्यायाभ्यसनं च वाङ्मयं तप उच्यते । मनःप्रसादः, सौम्यत्वं, मौनं, आत्मविनिग्रहः भावसंशुद्धिश्च मानसं तप उच्यते । एतत्त्रिविधं श्रद्धया परया, अफलाकांक्षिभिः तप्तं सात्विकं परिचक्षते । दानन्तु अनुपकारिणे देशे, काले, पात्रेच दातव्यमित्येव यत् दीयते तत् सात्विकं स्मृतम् ।

राजसानां ।पुनः आहाराः दुःख शोक आमयप्रदाः कटु तिक्त, आम्ल, लवण, अत्युष्ण, तीक्ष्ण, रूक्ष, विदाहि, प्रभृतयः इष्टाः भवन्ति । यज्ञाः फलं अभिसन्धाय तथा दंभार्थमपि इज्यन्ते । तपः सत्कारमानपूजार्थं तथा दंभेन च क्रियते । इदं चलं अध्रुवं च । दानन्तु फलमुद्दिश्य प्रत्युपकारार्थं परिक्लिष्टं च दीयते । तदिदं राजसं दानमिति स्मृतम् ।

तामसश्रद्धावतां आहारास्तु यातयामाः, गतरसाः पूतिगन्धा, पर्युषिताः उच्छिष्टभूताः अमेध्याश्च प्रिया भवन्ति। यज्ञाः पुनः श्रद्धाविरहिताः विधि-हीनाः अदक्षिणाः मन्त्रहीनाश्च भवन्ति। तपः पुनः मूढग्राहेण आत्मनः पीडारूपा परस्यउत्सादनार्थं वा क्रियते। तत् तामसमित्युदाहृतम्। दानं च असत्कृतम् अवज्ञातं अदेशकाले अपात्रेभ्यो दत्तं तामसमाहुः। एवं संग्रहेण निरूपितं भेदं अवहितः ध्यायस्व।

ओं तत् सत् इति ब्रह्मणः निर्देशः त्रिविधः स्मृतः वर्तते। तेन ब्रह्मणा ब्राह्मणाः वेदाः यज्ञाश्च पुरा विहिताः आसन्। सर्वोयं विश्वव्यापारः यज्ञरूपः तपोरूपश्च तस्य ब्रह्मणः दानरूपोपि भवति। तत एव यज्ञ, दान, तप, क्रियाः विधानोक्ताः ब्रह्मवादिनां सततं ओं इत्युदाहृत्य प्रवर्तन्ते। मोक्षकांक्षिभिः यज्ञः दानानि; तपः क्रियाश्च तत् इति फलमनभिसंधाय क्रियन्ते प्रशस्ते कर्मणि सद्भावे साधुभावे च सत् इत्येव प्रयुज्यते। सत्वगुण प्रधाने यज्ञे, दाने तपसि च स्थितिः सदिति उच्यते। तदर्थमनुष्ठीयमानं कर्म च सदित्येव अभिधीयते तस्मात् अश्रद्धया हुतं, दत्तं, कृत्स्नं, तपः तप्तं कृतं कर्म च असदित्येव उच्यते। एतेषां कर्मणां फलं नास्मिन् जन्मनि लभ्यते, न वा मरणानन्तरम् अन्यस्मिन् जन्मनि अनुभूयते। एतादृशानि कर्माणि असन् कर्माणि भवन्ति।

## पाठः १८

अर्जुन आह :— भगवन् त्यागो नाम कः? सन्न्यासं नाम किं? अनयोः तत्वं वेदितुमिच्छामि इति।

भगवान् आह :— कर्माणि त्रिधा विभक्तानि यथा नित्य, नैमित्तिक, काम्यरूपेण तथा च न स्वरूपतः त्यागः कर्मणां युज्यते। किन्तु अभिमान

विसर्जनमेव सन्यास इति प्राज्ञः अभिदधुः। त्यागो नाम फलत्यागः संग-त्यागः कर्तृत्वत्यागश्च भवति ततश्च सन्यास पदेन अभिमानस्य त्यागः उद्दिष्टः। त्यागशब्देन सर्वकर्म फलत्यागः इति फलितोऽर्थः। एवं विचक्षणाः प्राहुः।

अस्मिन् विषये विचक्षणानां द्वयीगतिरस्ति। कर्मणां स्वरूपतो त्यागं एके मन्यन्ते। अपरे पुनः यज्ञ, दान, तपः, कर्मादिकं न त्याज्यमिति वदन्ति। मम मतं अत्र वक्ष्ये। त्वं श्रुणु। त्यागो हि त्रिविधः संप्रकीर्तितः। यज्ञादिकं स्वरूपतो न त्याज्यम् कार्यमेव तत्। मनीषिणां एतानि पावनानि भवन्ति। एतेषां संगं त्यक्त्वा, तथैव फलानि त्यक्त्वा कर्तव्यानि इति मम मतं निश्चितं वर्तते। कर्मणां स्वरूपेण त्यागः अयुक्तः। नियतस्य सन्यासः कर्मणः न उपपद्यते। मोहात् कर्मणां त्यागः तामसः भवति। यः कोपि कर्तव्यं कर्म दुःखमिति कायक्लेशभयात् त्यजेत् सः राजसत्यागः सः त्यागफलं न लभते। इदं मे कर्तव्यमिति यः नियतं कर्म करोति सङ्गफले च त्यक्त्वा स त्याग सात्विकत्यागः कीर्तितः।

त्यागी अकुशलमपि कर्म न द्वेष्टि कुशलेष्वपि कर्मसु नानुषज्जते। छिन्न संशयः मेधावी सदा सत्वसमाविष्टः भवति। न कदापि देहभृता सर्वाणि कर्माणि त्यक्तुं शक्यन्ते कर्मणां फलं यः त्यजेत् स एव त्यागी इत्युच्यते।

कर्मणां फलं च त्रिविधम् अभिधीयते। अनिष्टं, इष्टं मिश्रं चेति इमानि फलानि अत्यागिनां संभवन्ति। ननु कदाचित् सन्यासिनाम्। सर्वकर्मणां च सिद्धये मया सांख्ये प्रोक्तानि पञ्चकारणानि वर्तन्ते। तन्निबोध प्रथमं अधिष्ठानं, द्वितीयं कर्ता, तृतीयं पृथग्विधं करणं चतुर्थं विविधाः चेष्टाः। पंचमं चात्र दैवमित्युच्यते। नरः शरीरेण वाचा मनसा च यत्कर्म प्रारभते न्याय्यं वा अन्याय्यं वा तत्र एते पंच हेतवः एवं सति अहमेव करोमीति यः अभिसंदधते स मूर्खः। अकृतबुद्धित्वात् स तत्वं न पश्यति। यस्य पूर्वो रीत्या अहंकारविरहितो भावः वर्तते यस्य बुद्धि-स्वरूपादन्यैः हेतुभिः नलिप्यते सः ज्ञानी इमान् लोकान् लोकसंग्रहाय हत्वापि तत्वतः न हन्ति। तस्मात् न निबध्यते।

कर्तव्यानां कर्मणां स्वरूपावगत्यै " कर्मचोदना कर्मसंग्रहश्च " अवगन्तव्यः गुणसंख्याने ते त्रिधा आसते। ज्ञानं, ज्ञेयं, परिज्ञाता इति कर्म चोदना विवृता। करणं, कर्म, कर्तेति, कर्मसंग्रहः परिकीर्तितः। पुनः ज्ञानं कर्ता च गुण भेदतः त्रिधाविभक्ताः। तेषां स्वरूपं भेदं च यथावत् अभिधास्ये-तानपि भवान् श्रृणु।

१. तत्र प्रथमं सात्विकज्ञानस्य स्वरूपं वक्ष्ये। यत्ज्ञानं विभक्तेषु परिदृश्यमानेषु भूतेषु एकं अव्ययं भावं ईक्षते तत्सात्विकं ज्ञानमिति विद्धि।

२. यत् ज्ञानं पुनः सर्वेषु भूतेषु नानाभावान् पृथग्विधान् वेत्ति तत् राजसं ज्ञानं विद्धि।

३. यत्पुनः कार्ये सक्तं अहेतुकमनुसन्धत्ते पूर्वोक्तभेदान् नाकलयति, कृत्स्नवदिति मनुते तत् अतत्वार्थवत् अल्पं च तामसं ज्ञानमिति उदाहृतम्।

१. सात्विकं कर्मणां स्वरूपं तावद्वदामि। यत्कर्म नियतं, संगरहितं, अरागद्वेषतः कृतं येन अफलप्रेप्सुना कर्त्रा तत् सात्वकमिति आचक्षते।

२. यच्च अहंकारेण कामेप्सुना वा बहुलायासं वा कर्म क्रियते तद्राजसमुदाहृतम्।

३. यस्तु अनुबन्धं न जानाति क्षयं च नोदीक्षते हिंसामपि अनवेक्ष्य मोहादारभ्यते तत्कर्म तामसमिति उच्यते।

१. कर्तुः गुणभेदात् भेदं उपलक्षयिष्यामि। यः कर्ता अनहंवादी, मुक्तसंगः, धृत्या, उत्साहेन च समन्वितः कर्मणां सिद्धौ असिद्धौ च निर्विकारः सः सात्विकः।

२. यः पुनः लुब्धः, कर्म फलप्रेप्सुः, अशुचिः, हिंसात्मकः, हर्षेण शोकेन च परिप्लुतः सः कर्ता राजसः।

३. तथैव यस्तु अयुक्तः कर्तव्येषु, प्राकृतः कर्मनिर्वहणे, स्तब्धस्वभावेन शठः नियमानुसरणे, नैष्कृतिकः कर्मस्वरूपपरिशीलने, अलसःनिर्वहणे, एष्वपि कर्मसु विषादी दीर्घसूत्री कालयापनेन, सः कर्ता तामस उच्यते।

बुध्देः तथा धृतेश्च त्रिविधं भेदं शृणु। अशेषेण मया प्रोच्यमानं धनंजय अवहितमनाः निध्यायस्व।

या बुद्धिः प्रवृत्तिं तथा निवृत्तिं च वेत्ति कार्यं अकार्यं बन्धं मोक्षं च सा बुद्धिः सात्त्विकी।

यया बुध्या मानवः धर्मं अधर्मं च, कार्यं अकार्यं च अयथावत् प्रजानाति सा राजसीबुद्धिः भवति।

तामसी बुद्धिस्तु सर्वार्थान् विपरीतान् मन्यते। यतः सा तमसा आवृता तत एव अधर्मं धर्ममिति, धर्मं अधर्ममिति च अनुसंधत्ते।

१. अव्यभिचारिण्या योगेन यया मनः प्राणेन्द्रियक्रियाः धार्यंते सा धृतिः सात्त्विकी।

२. यया धृत्या धर्मकामार्थान् धारयते प्रसंगेन फलाकांक्षी च सा धृतिः राजसी।

३. यया पुनः स्वप्नं, भयं, शोकं, विषादं मदं च न विमुञ्चति सा तामसी धृतिः।

१. ततः सुखस्वरूपं त्रिविधमभिधास्यामि। येन दुःखान्तं निगच्छति यत् सुखं आत्मबुद्धिप्रसादेन अनुभूयते, अग्रे विषमिव भाति, अमृतमिव परिणामे तत् सुखं सात्त्विकं आहुः।

२. यत्पुनः विषयाणां संयोगेन अग्रे अमृतोपमं अनुभूयते, परिणामे विषमिव भवति तद्राजसं स्मृतम्।

३. यत्पुनः आत्मनः मोहनं अग्रे अनुबन्धे च तत् निद्रा, आलस्य, प्रमादादिभिः निष्पन्नं तामसं उदाहृतम् ।

दिवि वा पृथिव्यां वा, देवेषु मानवेषु वा सत्वं त्रिगुणरहितं नास्ति । स्वभावप्रभवैः गुणैः ब्राह्मणानां क्षत्रियाणां, विशां, शूद्राणां च कर्माणि प्रविभक्तानि । शमः, दमः, तपः, शौचं, क्षान्तिः, आर्जवं, ज्ञानं, विज्ञानं, आस्तिक्यं एतानि ब्राह्मकर्माणि भवन्ति ।

शौर्यं, तेजः, धृतिः, दाक्ष्यं, युद्धे अपलायनं, दानं, ईश्वरभावश्च क्षात्रं परिकीर्तितम् ।

कृषिः, गोरक्षणं, वाणिज्यं च विशां भवति । तथैव शूद्राणां कर्म स्वभावेन परिचर्यात्मकं भवति । तस्मात् गुणानां विशेषेण जातिः अनुमेया न कदाचित् जन्मना निर्णतव्या ।

ततः सर्वेपि जनाः स्वे स्वे कर्मणि अभिरताः संसिद्धिं लभन्ते । स्वकर्मनिरतः यथा सिद्धिं विन्दति तच्छृणु । येन विश्वमिदं ततम् यतः सर्वेषां भूतानां प्रवृत्तिः प्रसरति तं स्वकर्मणा समभ्यर्च्य मानवाः सिद्धिं विन्दन्ति । स्वाभाविको गुणः अनुसर्तुं श्रेयः सः विगुणोपि भवतु । परधर्मः सुखेन अनुसरणयोग्योपि न श्रेयान् । कुतः स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् । कौन्तेय ! सदोषमपि सहजं कर्म न त्यजेत् । धूमेन अग्निरिव सर्वे आरंभा दोषेण आवृताः । यः असक्तबुद्धिः जितात्मा, विगतस्पृहः, सः सन्यासेन परमां नैष्कर्म्यसिद्धिं अधिगच्छति ।

यथा सिद्धिं प्राप्तः ब्रह्मणि तथाऽप्नोति-तत् समासेन निबोध । सा ज्ञानस्य परा निष्ठा वर्तते । बुध्या विशुद्धया सः युज्यते रागद्वेषौ व्युदस्य शब्दादीन् विषयान् त्यजति । धृत्या आत्मानं नियमयति । विविक्तसेवी यतवाक्काय मानसः लघ्वाशी ध्यानयोगपरो भवति । वैराग्यमुपाश्रयति । [illegible] अहंकारं, बलं, दर्पं, कामं, क्रोधं, परिग्रहं, विमुच्य निर्ममः शान्तः ब्रह्मभूयाय कल्पते ।

ईदृशः साधकः ब्रह्मभूतः प्रसन्नात्मा च भवति सः न शोचति न कांक्षति सर्वेषु भूतेषु समः मद्भक्तिं परां लभते। अनया भक्त्या मां यावानस्मि यश्चास्मीति तत्त्वतः अभिजानाति ततः मयि विशते। भगवद्व्यपाश्रयः सर्वाणि कर्माणि कुर्वन् तत् प्रसादेन शाश्वतं पदं अव्ययं अवाप्नोति।

तस्मात् चेतसा सर्वकर्माणि मत्परः संन्यस्य बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव। मच्चितः सर्व दुर्गाणि मत् प्रसादात् तरिष्यति। यदि अहंकारात् न श्रोष्यसि चेत् विनंक्ष्यसि। येन भवान् अहंकारमाश्रित्य न योत्स्ये इति मन्यसे, एष तव व्यवसायः मिथ्या एव-प्रकृतिः त्वां नियोक्ष्यति। कौन्तेय मानवः स्वभावजेन कर्मणा निबद्धः। यत् कर्म कर्तुं नेच्छसि अवशस्सन् तत् त्वमेव करिष्यसि।

अर्जुन! सर्वभूतानां हृद्देशे ईश्वरः तिष्ठति। सः मायया यन्त्रारूढानि इव सर्वाणि भूतानि भ्रामयन्नास्ते। सर्वेणापि भावेन तमेव शरणं गच्छ! तत् प्रसादात् परां शांतिं शाश्वतं स्थानं च अवाप्स्यसि। एवं ते गुह्यात् गुह्यतरं परं ज्ञानं आख्यातम्। एतत् अशेषेण विमृश्य यथेच्छसि तथा कुरु।

भूयः मे सर्वगुह्यतमं परमं वचः शृणु। इष्टोसि, सखा च इति एतदुत्तमं रहस्यं हितं कथयामि। मन्मना भव मद्भक्तः, मद्याजी मां नमस्कुरु, मामेव एष्यसि इदं सत्यं प्रतिजाने। मे त्वं मित्रोऽसि। सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज। अहं त्वां सर्वपापेभ्यः मोक्ष्ये मा शुचः।

कदाचन इदं ज्ञानं अतपस्काय, अभक्ताय, अशुश्रूषवे, अथवा यो मां अभ्यसूयति तादृशाय नवाच्यम् यः इदं मद्भक्तेषु अभिधास्यति अनेन गुह्यतम ज्ञानेन सः मामैवेष्यति नास्ति संशयः।



तवो मे प्रियो नास्ति यः अस्माकं संवादमिमं अध्येष्यति-ज्ञानयज्ञेन तेन अहमिष्ट इति मे मतिः। यः पुनः अनसूयुः श्रृणुयात् इदं ज्ञानं सोपि

पुण्यकर्मणां लोकान् आप्नोति। पार्थ मदुक्तमेतत् एकाग्रेण चेतसा कच्चित् श्रुतं किम् ? कच्चित्तव अज्ञानमोहः नष्टः ? मोहः नष्टः। स्मृतिः लब्धा त्वत्प्रसादात् इदानीं गतसन्देहः स्थितोस्मि। तव वचनं करिष्ये। इति अर्जुन आह।

धृतराष्ट्रं प्रति सञ्जयः उवाच :—अहं वासुदेवस्य पार्थस्य च महात्मनः इदं अद्भुतं रोमहर्षणं संवादं अश्रौषम्। इदं परं गुह्यं अहं व्यासप्रसादात् श्रुतवान्। केशवार्जुनयोः इमं पुण्यं संवादं स्मारं स्मारं मुहुर्मुहुः हृष्यामि।

तच्च हरेः अत्यद्भुतं रूपं संस्मृत्य संस्मृत्य राजन् मे महान् विस्मयः पुनः पुनः हृष्यामि।

यत्र योगेश्वरः कृष्णः यत्र पार्थो धनुर्धरः।
तत्रश्रीर्विजयो भूति र्ध्रुवा नीतिर्मतिर्मम॥

# उपनिषद् रूपकम्

## १

अत्र किल महाश्रोत्रियाः परं ब्रह्म अन्वेषमाणाः प्राच्यावाच्यपाश्चात्यदेशेभ्यः आगता वर्तन्ते। ते मानवसमाजं परिशीलयन्ति। राज्यशासनं सम्मानयन्ति। आर्थिकपारिश्रामिकविभागेषु सिद्धहस्ता वर्तन्ते। विदेशीयसंस्कृतौ निष्णाताः, अस्य देशस्य संस्कृतेः अध्ययने बद्धश्रद्धाश्च वर्तन्ते। अयं तत्र भवान् प्रजासत्तावादैकशरणानां रष्यादेशीयानां गवेषणाविभागस्य प्रतिनिधिः अद्य व्योमयानेन अस्मदीय व्योमयानस्थाने अवततार। भारतीयनां संस्कृतिं आपादचूडं अध्येतुमीष्टेऽयं शिबिलो महाशयः। अयं किल वेडज् उड् पण्डितः रसायनशास्त्रे अन्तर्ग्रहयानविद्यायां च दीक्षितः विश्वस्य परमकारणं जिगमिषति। अयमत्र भवान् दयासागरस्य बुद्धस्य उपदेशपरम्परानुसरणेन पवित्रीकृतहृदयः शिमिको विचक्षणः चीनादेशादागतः। एवमन्येप्येते महानुभावाः ज्ञानपिपासया भारतभुवं प्राप्ताः। सर्वेप्येतेऽत्र प्रचलिष्यमाणवेदान्त विज्ञानसभायां भरतखण्डस्य विभिन्न प्रदेशेभ्यः आगतनां छात्राणां अनुभवमिद्धान् अध्यात्मज्ञानविषयकोपन्यासान् शुश्रूषन्ति। तानि वाङ्मुखीनानि नियमेन एतान् भावुकान् प्रीणयन्ति। अहमपि महाश्रोत्रियस्य तत्र भवतः सभापतेः आज्ञया आगतान् अतिथीन् जिज्ञासून् तत्र भवद्भयः सभासदेभ्यः प्रातिम्बिकरूपेण निर्दिशामि।

अनर्घां आचार्यपरम्परां वन्दे। तत्र भवन्तः महाभिजनाः श्रोत्रियाः शुक्लयजुःशाखाध्यायिनः गुरवः गुरुकुलात् समावर्तने अन्तेवासिनः एवं उपदिदिशुः। अयि भोः छात्राः! लोके सर्वेषां फलद्वयं अभीप्सितं इह लोके सुखं परलोके श्रेयश्च। इहलोके सुखाय प्रकृतेः त्रिलासः अनुसरणीयः, अनुलंघनी-

यश्च । दैवनिर्मितमेव नालं सुखाय दुःखाय वा मानवस्य मनुष्यकल्पितानि साधनान्तराणि बहूनि विद्यन्ते तानि काले काले आविष्क्रियन्ते । तस्मात् तान्यप्यनुसर्तव्यानि आचरणीयानि च ।

परलोकोकहिताय मानव एव अधिकृतः वर्तते । तस्यैव परलोकहिताय यतनं विधिलिखितम् । तत्तु आत्मविकासे साक्षात् परम्परया च हेतुभूतं जागर्ति । अध्यात्मचिन्तकाः केचन इमां विद्यामिति जगदिरे । सम्भूतिरिति अन्यैरुत्कीर्तितम् । एवमेव इह लोकसुखाय अनुष्ठीयमानानि विधिलिखितानि कर्माणि अविद्या इति असम्भूतिः इति च पण्डितैः गीयते । अधिकारविशेषेण अनुसरणीयं योगाङ्गपरिकर्मितं मृत्युतरणाय विहितं साधनं विनाशपदेन सूचितम् ।

परब्रह्मवस्तु सर्वत्र व्याप्तम् । यत् आनन्ददायकं नकस्यापि अरुन्तुदं, तत्सर्वं तस्य सर्वनियन्तुः विलासभूमिः । यः सर्वेषु भावेषु तत्परतत्वं अनुसंधत्ते स समदृष्टिः न कस्मादपि विजुगुप्सते । यस्य समाधौ विश्वात्मकः विश्वातीतः परमात्मा दर्शनसमानाकारतां भजेत तस्य मोहोऽपि नास्ति शोकोऽपि नास्ति । अतः विद्वान् साधकः पुरुषः इह लोकसुखाय मनुष्यकल्पितनियमान् अनुसरेत् । प्रकृतिनियमेन प्रवर्तिष्यमाणानि विश्ववृत्तानि समासेवेत । अध्यात्मविकासाय विहितान् शास्त्रीयान् नियमान् अनुतिष्ठेत् । एवं लौकिकानि शास्त्रीयाणि च कर्माणि आसेवमानः शतं समाः जिजीविषेत् । तं कर्माणि न लिम्पन्ति । शोकमोहौ न पीडयतः । सर्वदा शान्तिः संपत्स्यते । परवस्तु तस्य समाहितो भवति । एवं परिपूर्णः साधकः कालेन अनादिप्रवृत्तात् संसारात् मुच्येत । अतः धीमान् ममतारहितया भावनया सुखदुःखानि उपभुञ्जानः प्रतिकलं परतत्वं कालदेश-दशानुरोधेन उपासीत ।

अतः परं किमभिवांच्छितम् ?

तथापीदमस्तु ।

२

अहमस्मिभोः उत्तरदेशादागतः ...... नामास्मि। अधिगतसकल-विज्ञानप्रपञ्चा गुरवः। स्नातकानां छात्राणं चरमसन्देशं व्यतीर्णवन्तः। अयि अन्तेवासिनः आन्तरीयां अधिगतिं, ज्ञानं इति जानथ। बाह्यविषयणीं अवगतिं विज्ञानमिति मन्येथाः। ज्ञानविज्ञानयोः साम्यं सम्यक् अधिगम्य स्वजीवने उपयुंजीथाः। एष उपदेशः। इदमेव कौशलं, इदमेव तत्वज्ञानम्। यत्तत्वं येन प्रकारेण विद्यते तस्य "तत्वेन" अवगतिः तत्वज्ञानम्। इदं ज्ञान विज्ञानयोः समानम्। सर्वप्रकारं ज्ञानं अशेषविषयात्मकं विज्ञानं च ज्ञानेन्द्रियाणां द्वारेणैव अधिगम्यते ज्ञानेन्द्रियाणि पञ्च-श्रोत्रं चक्षुः, त्वक्, घ्राणं, रसना इति। एतानीन्द्रियाणि नियतविषयग्राहकाणि। यथा चक्षुः रूप-मेव श्रोत्रं शब्दमेव, एवमन्यानि। सर्वविषयकं सर्वेषां ज्ञानानां सामान्यं मनः वर्तते, एवं ज्ञानसाधनानि षडिन्द्रियाणि संवृत्तानि। कर्मनिर्वर्तनसाध-नानि कर्मेन्द्रियाणि, तानि वाक्पाणिपादादीनि पञ्च, एवं स्थिते प्राणः सर्वेषां इन्द्रियाणां प्रेरणे समाना, प्रेरणाशक्तिः वर्तते। अत्रेदमवधेयं वाचा मनसा चक्षुषा श्रोत्रेण च यावद्विज्ञानं संपादितं तत् यावच्च ज्ञानमासादितं बाह्यं आन्तरीयं च अल्पमेव। यतः सर्वकारणं परवस्तु। विज्ञातात् अविज्ञाताच्च विल-क्षणं वर्तते। साकल्येन ज्ञातं इति वक्तुं अयुक्तम्। अविज्ञातमिति असत्यं भवेत् तस्मात् पदार्थस्वरूपमनुसृत्य यो बोधः जायते सः अंशतः ज्ञात एव भवति। अयं अनुबोधः। परिपूर्णं ज्ञानं प्रतिबोधेन अधिगम्यते। तस्मिन् सर्वमिदं विश्वं प्रतिष्ठितं तदेव ब्रह्म। नेदं यदिदमुपासते। सर्वेषु भावेषु पदार्थेषु तद्ब्रह्म व्याप्तं प्रत्यक्षेण अनुभूयते च। यः प्रतिबोधमुखेन युक्त्या इममर्थं सुविशदमा-कलयति स एव धीमान्, ज्ञानी, सः निश्रेयसपदवीमधिरोहति। काम-क्रोधलोभोपहतचेतसः इयं दृष्टिः न स्फुरति यदा मानवस्य पदार्थविषयकज्ञानानां कारणे जिज्ञासा जायते अथवा संशयः उदेति तदा ब्रह्मजिज्ञासा सुनिष्पन्ना इति जानीयात्। येन स्व जीवने सत्यं तपः दमः वेदानामध्ययनं च अंगभावेन आसे-

च्यते तस्यैव इदं तत्वज्ञानं जायते, अभिवर्धते, परिणमते, फलति, स्वस्वरूपा-विर्भावेण अनुभूयते च। एवमियं ब्राह्मीभावना उपनिषत् उपदिष्टा। अतः परं किं वक्तव्यम्?

२

भोः काश्यप गोत्रोऽस्मि। दक्षिणापथे सुगृहीतनामधेयानां सकलशास्त्र मुर्धिधयानामाचार्याणां गुरुकुले निर्व्यूढाध्ययनोऽस्मि। यथासंप्रदायं गुरवः प्रापञ्चिकं विज्ञानं आध्यात्मिकं ज्ञानं च उपदिश्य एवं अनुशशासुः। अयि छात्राः, इदं विश्वं अश्वत्थवृक्ष इवास्ते। अस्मिन् चराचरं व्यूहं वर्तते। इदं विश्वं तस्मिन् प्रतिष्ठितं तस्य भिया सर्वे देवाः सर्वे ग्रहाः सर्वाणि भूतानि प्रवर्तन्ते। सः अव्यक्तः सर्वव्यापी पुरुषः-तं ज्ञात्वा अमृतत्वं प्राप्नुवन्ति। न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्। हृदामनीषा मनसाऽभिक्लृप्ताः एवं विदुः। यदा मनसा सह पञ्च इन्द्रियाणि अवतिष्ठन्ते बुद्धिश्च नविचेष्ठते तां स्थिरां इन्द्रिय धारणां योगं इति मन्यन्ते। यदा साधकस्य कामाः हृदिस्थिताः सर्वे प्रमुच्यन्ते तदैव इदं परवस्तु अस्तीत्येवेपलब्धव्यो भवति। प्रसीदति तत्वभावः। अत्रैव साधकः ब्रह्म समश्नुते। एतावदनुशासनम्। अस्यस्वरूपं व्याख्यास्यामः।

इदं शरीरं पुरमित्युच्यते। अस्मिन् जीवात्मा परमात्मा च तिष्ठतः। जीवात्मा जाग्रत् स्वप्न सुषुप्ति दशा अनुभवति कर्मफलं सुखं दुःखं च अनुभवति। परमात्मा पुनः नित्यः एकः चेतनः बहूनां चेतनानां कामान् विदधाति परन्तु स्वयं न कर्मफलं भुंक्ते। यथा वायुः अग्निः विश्वं व्याप्य तिष्ठतः तथा परमात्मा व्याप्य तिष्ठति। अयं जीवः प्राणेन वा अपानेन वा न जीवति यस्मिन्नेतौ

उपाश्रितो तेन जीवति । एवं ज्ञात्वा जीवात्मपरमात्मनोः स्वरूपं स्वभावं च न शोचति । अस्मिन् विषये ज्ञानसाधनानि निरूपयामः ।

स्वयम्भूः इन्द्रियाणि असृजत् । तानि बहिर्मुखानि । कश्चिद्धीरः आवृत्त चक्षुः अन्तरात्मानं पश्यति । येन रूपं रसं गन्धं शब्दान् स्पर्शांश्च वेत्ति तं महान्तं विभुं परात्मानं अवैति । यः सर्वभोक्तारं परात्मानं वेद ततो न विजुगुप्सते । यः नाना भावान् पृथग्विधान् स्वतन्त्रान् पश्यति न सः तत्त्वं वेद । सः मृत्युमाप्नोति । यथा दुर्गेषु वृष्टं उदकं पर्वतेषु विधावति एवं पृथग्धर्मानुपश्यन् तान्येव चपलः अनुविधावति । यथा उदकं शुद्धे सिक्तं तादृगेव भवति, एवं विजानतः आत्मनां स्वरूपं भवति । अतः उत्तिष्ठत जाग्रत प्राप्यवरान्निबोधत । जीवात्मा रथी शरीरं रथः, बुद्धिः सारथिः इन्द्रियाणि हयाः मनः प्रग्रहः आत्मेन्द्रियमनोयुक्तं मनीषिणः भोक्ता इत्याहुः । यस्य सारथेः इन्द्रियाणि दुष्टाश्वा इव अवश्याः भवेयुः स अविज्ञानवान् भवति । यस्येन्द्रियाणि सदश्वा इव भवन्ति सः विज्ञानवान् समनस्कः भवेत् । सः अध्वनः पारं विष्णोः परमं पदं प्राप्नोति । बाह्यविषयाः स्थूलाः इन्द्रियाणि सूक्ष्माणि पुरुषः सूक्ष्मतमः । साधकः वाङ्मनसि, मनः ज्ञाने ज्ञानमात्मनि च नियच्छेत् । एवं सोपानारोहणक्रमेण अनन्तं परमात्मानं ध्यात्वा प्रमुच्यते । आख्यायिकां अस्मिन्नर्थे निरूपयामः ।

अवरेणप्रोक्तः अयं सूक्ष्मो धर्मः बहुधा चिन्त्यमानोऽपि न ज्ञायते । नायमात्मा प्रवचनेन लभ्यः न मेधया न बहुना श्रुतेन यमेवैषवृणुते तेन लभ्यः । तस्मै आत्मा विवृणुते तनूं स्वाम् । शान्तः समाहितः, दुश्चरिताद्विरतः प्रज्ञानेन एनं आप्नुयात् । यस्य ब्रह्म क्षत्रं च ओदनं भवति, मृत्युः यस्य उपसेचनं सर्वे वेदाः यत्पदमामनन्ति, ॐ मित्येव यस्य वाचकः प्रणवः वर्तते तं ज्ञात्वा अमृतं विन्दते । अविद्यायां अन्तरे वर्तमानाः अन्धेनैव नीयमानाः अन्धा इव अधोगतिं गच्छन्ति । अतः धीरः प्रेयः श्रेयश्च, संपरीत्य विविनक्ति । मन्दः प्रेयः वृणीते योग क्षेमाशया । धीरः श्रेयः वृणीते । पुरा नचिकेतानाम

ओजस्वी मेधावी, धीमान् साधकः आसीत् सः पित्रा अनुशिष्टः यमं आससाद। यमेन अनुगृहीतान् त्रीन् वरान् वव्रे। पिता शान्तो भूयात् इति प्रथमोवरः। कर्मफलानां विवेचनं द्वितीयोवरः। अमृतत्वप्राप्ति विचारः तृतीयो वरः। यमः इहलोकभोगानुपवर्ण्य नचिकेतसं प्रलोभयामास। धीमान् नचिकेताः इहलोकभोगान् आगमापायिनः निराचकार। शाश्वतं अमृतत्वप्राप्तिं श्रद्धया अधिजगाम। एवं भवन्तोऽपि परिदृश्यमानं विश्वं विविच्य परात्मानं निचाय्य, सत्यं, तपः श्रद्धादिभिः इहैव जीवनं पवित्रीकृत्य निश्रेयसं प्राप्स्यथ। इति शशास। अतः परं किं विज्ञापनीयम्?

परिचितारमार्गाणां तत्र भवतां सन्निधौ पेयमः भारद्वाजः आचार्याणां गुरुकुले अधिगतां अध्यात्मविद्यां संग्रहेण प्रस्तोतुं सविनयं अवकाशं प्रार्थये। "अद्रिकन्याचरण किसलयन्यासधन्योपकण्ठात्" हिमालयादागतोऽस्मि। अथर्वशाखाध्यायिनां आचार्याणां गुरुकुले द्वादशवर्षाण्यवसम्। सर्वेषु व्यवहारेषु गुरुकुलजीवने अध्ययनं भावनापरिष्कारः नयानुसरणं विनयाधानं अधीति बोधआचरणप्रमुखैः प्रयोगमुखैः लोकशास्त्रयोः सर्वदा समन्वयश्च आसीत्। अनेन व्यवस्थयेन विद्याभ्यसनेन मोदमभजम्। अस्मिन्नवसरे आत्मकथां समासेन निवेदयामि। वयं षण्मित्राणि तत्वजिज्ञासवः अवसाम। अहं भारद्वाजः, अन्ये पञ्च, सत्यकामः, गार्ग्यः, आश्वलायनः, वैदर्भिः, कात्यायनः इति। वयं संभूय पिप्पलादं भगवन्तं विधिवदुपसन्ना अभूम। भगवानुवाच। भूय एव तपसा ब्रह्मचर्येण श्रद्धया संवत्सरं संवत्स्यथ, यथाकामं प्रश्नान् पृच्छत। यदि विज्ञास्यामः सर्वं वक्ष्याम इति। तथैव वयं संवत्सरं उषित्वा कात्यायनं पुरस्कृत्य अपृच्छाम। कात्यायनः पप्रच्छ— भगवन् कुतो वा इमाः प्रजाः प्रजायन्ते? इति भगवानाह– विश्वमनेकरूपं वर्तते प्रत्येकशः विश्वरूपाण्यवगन्तुमशक्यम्। तस्मात् लक्षणमर्यादया अवगच्छथम्। सूक्ष्मा स्थूला च शक्तिः विश्वसृष्टेः स्थितेः प्रलयस्य च निर्वर्तने निरूढाऽस्ति। तया विश्वमिदं प्रवर्तते, प्रतितिष्ठति विलीयते च। प्रजाकामः प्रजापतिः अनया शक्त्या उपकरणीभूतया सृजति पाति, अत्ति। सूक्ष्मस्थूलयोः ज्ञापनाय पण्डिताः

आदित्यः, चन्द्रमाः, प्राणः, रयिः, इत्यादिपदैः सूचयन्ति। तस्मात् सर्वकारणं परब्रह्म अस्ति। उपकरणं तस्य शक्तिः। अथ द्वितीयः वैदर्भिः पप्रच्छ। भगवन् कत्येवदेवाः प्रजां विधारयन्ते, कतर एतत् प्रकाशयन्ते, कः पुनरेषां वरिष्ठः इति? भगवानाह—वाङ्मनः चक्षुः, श्रोत्रं इति उपकरणानि। तेषां प्रेरणाशक्तिः वरिष्ठः प्राणः। रथनाभौ अराविव प्राणशक्तौ सर्वे प्रतिष्ठिताः ते प्राणं एवं स्तुवन्ति। प्राणस्येदं वशे सर्वं त्रिदिवे यत् प्रतिष्ठितम्। मातेव पुत्रान् रक्षस्व श्रीश्च प्रज्ञां विधेहि नः।"

अथाश्वलायनः पप्रच्छ भगवन् कुतएष प्राणो जायते? कथमस्मिन् शरीरे आयाति! आत्मानं वा प्रविभज्य कथं प्रतिष्ठते, केनोत्क्रमते? कथं बाह्य अभिधत्ते कथमध्यात्मम्? भगवानाह—अति प्रश्नान् पृच्छसि ब्रह्मिष्ठोसि इति। आत्मन एष प्राणो जायते, मनोकृतेन अस्मिन् शरीरे आयाति। अयं प्राणः अपानादीन् अन्यान् प्राणान् सम्राडिव पृथक्कार्यनिर्वर्तने विनियुङ्क्ते। हृदिह्येष आत्मा, अत्र एकशतं नाडीनां—तासां शतं शतं एकैकस्यां विभागाः सन्ति। पुनः प्रत्येकं ७२–७२ प्रतिशाखानाडीसहस्राणि भवन्ति आसु व्यानश्चरति। अथ एकेन उदानः वायुः ऊर्ध्वं पुण्येन पुण्यलोकं नयति, पापेन पापं, उभाभ्यामेव मनुष्यलोकम्। यच्चित्तः तेनैष प्राणमायाति स आत्मना यथा संकल्पितं लोकं नयति। तदध्यात्मम्।

उत्पत्तिमायतिं स्थानं विभुत्वं चैव पञ्चधा।
अध्यात्मं चैव प्राणस्य विज्ञायामृतमश्नुते॥

अथ गार्ग्यः पप्रच्छ :—भगवन् एतस्मिन् पुरुषे कानि स्वपन्ति? कानि जाग्रति? कतर एषः स्वप्नान् पश्यति कस्य एतत्सुखं भवति? कस्मिन्नु सर्वे संप्रतिष्ठिता भवन्ति इति। सर्वे परे देवे मनसि एकी भवति। तेन पुरुषः न शृणोति, न पश्यति, न जिघ्रति, न रसयते, न स्पृशते नाभिवदते, नादत्ते, नानन्दयते, न विसृजते, स्वपितीत्याचक्षते। प्राणाग्नयः जाग्रति। अत्रैष देवः स्वप्नं पश्यति। एतस्मिन् शरीरे एतत्सुखं भवति। सर्वं परे आत्मनि संप्रतिष्ठन्ते।

# ४

महायोगिनः परमेश्वरस्य तपश्चरणमहिमा प्रभावितस्य गौरीगुरोः कैलास क्षेत्रादागतोऽस्मि। भूगोलस्य प्रकृतिसौन्दर्यनायकमणेः तुहिनाद्रेः प्रान्तभूमौ सदनूचानसिद्धाध्ययनगरिमपरिपूर्णानां अथर्ववेदशाखाध्यायिनां परम्पराधिष्ठित गुरुकुले वेदत्रयीमधीत्य इदानीं भजन्महानदीषु सेव्यमानः सज्जनान् दक्षिणापथमागतेऽस्मि। यदत्रास्मिन्नगरे प्रचलितायां सभायां समवेतैः सह विचारविनिमयेन तावदात्मनो भावनाम्बरे चञ्चद्‌ज्ञानज्योतिषां संस्करणमपेक्षमाणः स्वाधीतानध्यात्मविषयान् गुरूपदेशेन संस्कृतान् सर्वविदां भवतां पुरतः वाचां तनोमि। अस्माकं गुरुकुले प्रकृतिरेव शिक्षकः, सब्रह्मचारिणः निमित्तकारणम्। गुरवः उपद्रष्टारः अन्तेवासिनः भोक्तारः कर्तारः विज्ञातारः, प्रयोक्तारश्च।

गुरवः अर्हेभ्यः तत्वमेवमुपदिशन्। नायमात्मा बलहीनेन लभ्यः, अतः बलिष्ठाः भवथ। अथ प्रवचनेन मेधया बहुना श्रुतेन वा न लभ्यः। यं एषः वृणुते तेन लभ्यः ततः तस्य आत्मा तनुं स्वां विवृणुते। अतः तमेव शरणं व्रजथ। चक्षुषा वाचा कर्मभिः वा न ग्राह्यमिदं आत्मतत्वम्। विशुद्धसत्वेन ज्ञानेन ध्यायमानः पश्यति। तं सूक्ष्मात् सूक्ष्मतरं अचिन्त्यरूपं शरीरे अत्रैव विन्दथ। एनं संप्राप्य ऋषयः ज्ञानतृप्ताः अभवन्, श्रोत्रियाः ब्रह्मनिष्ठाः सर्वभूतहिते रताः क्रियावन्तो बभूवुः। अस्मिन् शरीरे इमौ द्वौ जीवात्मपरमात्मानौ सखायौ इमं प्राकृतं वृक्षं परिषस्वजाते। तयोः जीवात्मा शुभाशुभं कर्मफलं भुनक्ति। परावरे अस्मिन् दृष्टे संशयाः छिद्यन्ते, कर्माणि क्षीयन्ते। इहैव ब्रह्मपुरे एष आत्मा तिष्ठति, स प्राणैः मनसा सर्वैः इन्द्रियैश्च ओतः प्रोतश्च। तमेवैकं आत्मानं जानथ, अन्या वाचो विमुञ्चथ।

अत्रोपायमुपदेक्ष्यामः। उपसासने ब्रह्म लक्ष्यं भवति। आत्मा शरः, तन्मयेन [illegible] गिरयः

सर्वाणि ज्योतींषि च प्रवृत्तानि। सः वाह्याभ्यन्तरः अजः अमूर्तः परतः परोऽस्ति। ज्ञानी साधकः कर्मचितलोकान् परीक्ष्य कर्मभिः नित्यः आत्मा न प्राप्यते, येन उपायेन प्राप्यते तद्विज्ञानार्थं गुरुमेवाभिगच्छेत्। विद्वान् गुरुः उपसन्नाय प्रशान्तचित्ताय शिष्याय ब्रह्मविद्यां तत्त्वतो ब्रूयात्। अधिगतपरमार्थः यज्ञादिभिः प्राप्यं फलं न बहुमनुते। इदं श्रेयः नाभिनंदन् शाश्वते स्वस्वरूपा विश्रांये यतेत—तानि सत्यकामाः आचरथ।

अत्र द्वे विद्ये वेदितव्ये इति ब्रह्मविदो वदन्ति। तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद :—शिक्षाकल्पोव्याकरणं—निरुक्तं छन्दः ज्योतिषमिति व्यवहार-निर्वहणाय उपदिश्यते। अथ परा येन अदृश्यं अग्राह्यं सर्वगतं सुसूक्ष्मं भूतयोनिं धीराः परिपश्यन्ति।

एवं यः परमं ब्रह्म वेद स ब्रह्मैव भवति। अस्य कुले अब्रह्मवित् न भवति। शोकं पाप्मानं च तरति। विमुक्तः अमृतो भवति। इममर्थं महाश्रोत्रियाः भारद्वाजादयः परम्परया अधिजग्मुः। नमः परमर्षिभ्यः।

५

अग्निभोः आत्मगुणसंपन्नाः। प्रकृतिगुणविलासभूयिष्टे अस्मिन् जगति भवादृशः आत्मवतः आरिराधयिषया प्रस्थितोऽहम् उत्तर भारतभूमेः आगतोऽस्मि। यत्र धवलगिरि, काञ्चनगङ्गा, गौरीशङ्कराख्यैः शृङ्गैः देदीप्यमानः यः महागिरिः विराजते, भूगोले जीवतां मानवानां अर्धाधिकसंख्याकानां अन्नदाता चकास्ति। यस्मात् सिन्ध्वादयो नदाः गङ्गादयश्च नद्यः पश्चिमोत्तरेषु दिक्षु प्रवहन्ति। यत्रैव यांकटे कपिलानदी प्रमुखाः उत्तरे पूर्वे च सर्वा वर्मा।

चीना देशेषु प्रवहन्ति । यं शैलं भगवान् श्रीकृष्णः स्वाभेदेन 'स्थावराणां हिमालयः' इत्यभिदधे । तस्मात् त्रिविष्टद्देशादागतोऽयं जनः । सर्वेषां प्राणिनः प्रथमं जीवननिर्वर्तने उपायोऽधिगन्तव्यः । यस्मिन्नर्थे अर्थः कामश्च प्रवृत्तो वर्तते । कामः अनुभवगोचरः, अर्थः तत्साधनम्, अनयोः संस्करणे नियमने च धर्मः, साधनम् । इहलोके परत्र च सुख–दुःखानुभवौ विद्येते । अनित्ययोरनयोः परित्यागपूर्वकं नित्यं पदं अन्वेष्टव्यं भवति । यस्मिन्नर्थे चिरन्तनैः उपायाः अनेकमुखाः निरूपिताः अनुसृताः आदृताः अनुभूताश्च ।

विश्वमिदं सर्वं त्रिकालाधीनं वर्तते । त्रिकालातीतः परमात्मा अस्ति । तत्प्राप्तिः विश्वविज्ञानपूर्वकं अध्यात्मधिगमेन; समाश्रित्य उपासनानां उपसंहारः तत्परं तत्वं वर्तते । तस्य वाचकः प्रणवः । स प्रणवः त्रिकालाधीनं विश्वं अतीतं ब्रह्म च लक्षयति । विश्वं तद्भिन्नं वर्तते । सर्वे प्राणिनः जाग्रत् स्वप्नसुषुप्तिरूपं अवस्थात्रयं नियमेन अनुभवन्ति । जाग्रदवस्थायां आत्मा मनः इन्द्रियाणि ज्ञातव्यविषयाश्च संप्रयुज्यन्ते । सुखं च दुःखंचानुभूयते । स्वप्ने आत्मेन्द्रियमनसां समवायो वर्तते । विषयाणां स्वरूपतोऽभावः । सुषुप्तौ आत्ममनसोरेव समवायः । विषयाणां इन्द्रियाणां च संप्रयोगो नास्ति । यस्यामवस्थायां मया जाग्रदवस्था अनुभूता स्वप्नं अनुभूयते सुषुप्तिश्च इति धारणा बोभूयते एताभिः अवस्थाभिः भिन्नं स्वरूपमनुसंधत्ते सा तुरीया अवस्था ।

अध्यात्मचिन्तकाः जागरितस्थानं वैश्वानरमाहुः । स्वप्नस्थानं तैजसमूचिरे । सुषुप्तस्थानं चेतोमुखं प्राज्ञमभिदध्रिरे । तुरीयं प्रज्ञानघनं इति लक्षयन्ति । अन्यैः पदैः क्रमशः नान्तःप्रज्ञं न बहिःप्रज्ञं न प्रज्ञं नाप्रज्ञं प्रज्ञानघनं इति च निरूपयन्ति । तथा वाचकं प्रणवमादाय वैश्वानरो अकारः प्रथमा मात्रा तैजसो उकारः द्वितीया मात्रा प्राज्ञो मकारः तृतीया मात्रा । अमात्रः चतुर्थः अव्यवहार्यः ओंकारः आत्मेति संदिशन्ति ज्ञानिनः । एवमेव पादचतुष्टयं बुध्यारोहाय निरूपयन्ति । वैश्वानरः प्रथमः पादः सप्ताङ्गः एकोनविंशतिमुखः स्थूलभुक् । द्वितीयः प्रविविक्तभुक् तैजसः । चेतोमुखः आनन्दभुक् प्राज्ञः । अपरं

प्रपञ्चोपशमं शान्तं शिवं अद्वैतं चतुर्थं मन्यन्ते। यः सर्वात्मानं सर्वेषु भावेषु अनु पश्यति कारणेषु कार्यं कार्येषु कारणरूपं च अनुसंधत्ते सः अमृतत्वं विन्दते एवं मण्डूको नाम ऋषिः प्रोवाच।

---

६

"जनन मरण हरण चरण सरसिजलीलस्य" महापुरुषस्य वैभवप्रतीकरूपे दक्षिणापथे प्रतिष्ठितानां कृष्णयजुः शाखाध्यायिनां गुरुकुले न्यायं धर्मं च बहुधा अधीतवानस्मि। "कलिकाल विधुन्तुदकवलितविवेक चन्द्रमस्सु" एतेषु जनेषु आशाकिरणान् सूचयन्तः आचार्या प्रायेण, एवं निजगदुः। विचारशास्त्राणि केवलं श्रवणमात्रे निलीयन्ते। ततः "यच्छ्रुतं, अनुभवपर्यवसायि भवति तद्ज्ञानमेव' मातेव पुत्रान् रक्षतीति निश्चित्य, मानवस्य व्यवहारे अनुसरणीयां नीतिं, अधिगन्तव्यं धर्मं, अभ्यसनीयं कौशल्यं च विशदीचक्रिरे।

सर्वस्य जीवनं प्रियतमं वर्तते। तस्य पोषणं अन्ने प्रतिष्ठितम्। तस्मात् सर्वेषां कामानां आधारभूतस्य अन्नस्य सम्पादनं, अभिवर्धनं, वितरणं, अदनं च प्रथममधिगन्तव्यम्। तेन प्रतिष्ठिते सति शरीरस्थैर्ये आरोग्ये, बले, अनन्तरं जिज्ञासा प्रवर्तते। स्थूलप्रपञ्चः अन्नशब्देन सूच्यते। भूतानां सर्वव्यवहाराः प्राणे प्रतिष्ठिताः। अयं प्राणः प्रतिव्यक्तिविच्छिन्न इव दृश्यते, अनुभूयते च। परन्तु विश्वव्यापारेषु अनन्तः अखण्डश्चायं शक्तिरूपेण विभाति। अनन्तरं भावनासारस्वरूपं मनसः वैभवं अधिगच्छेत्। यावत्पर्यन्तं कामक्रोधलोभादीनां कर्मणां प्रेरकत्वं अनुभवगोचरो भवति तावदेव मनसः साम्राज्यं विद्यात्। अभेदेन यस्यां अवस्थायां अथवा यस्मिन् ज्ञाने सर्वे विषयाः जायन्ते, अभेदेन यस्यां अवस्थायां अथवा यस्मिन् ज्ञाने सर्वे विषयाः जावर्टाति, अभेदन यस्यां अवस्थायां अथवा यस्मिन् ज्ञाने सर्वे विषयाः

एतानि चत्वारि विद्यन्ते, कर्मसु न प्रेरयन्ति मानवं तत् ज्ञानमयं पदम्। एतानि चत्वारि विद्यन्ते, कर्मसु न प्रेरयन्ति मानवं तत् ज्ञानमयं पदम्।

पदानि अन्नमय, प्राणमय, मनोमय, विज्ञानमय शब्दैः परिभाष्यन्ते।

अनन्तं अखण्डं केवलं बुद्धिबोध्यं परं ब्रह्मेत्याहुः। तदेषा अभ्युक्ता, ब्रह्मवित् आप्नोति परमिति। पुरा भृगुः 'पितरं वरुणं मे ब्रह्म अधीहि' इति प्रार्थयामास। तेन उपदिष्टः स्थूलं विश्वं पुरस्कृत्य अन्नप्राणमनो विज्ञान मयानतिरिच्य आनन्दं ब्रह्मेति व्यजानात्। वाचा मनसा वा गृहीतुं इदमशक्यम्। अनेनै भीता इव सर्वे चरन्ति ग्रहनक्षत्रादयः भ्रमन्ति। सदिति वा असदिति वा केवलं निर्देश्यं परवस्तु। अनुभवेनैव रस्यते अतः 'रसः'। य एवं वेद सः अभयंगतो भवति। यथा पक्षिणः पुच्छं सर्वेषां व्यवहाराणां आधारभूतं एवं ब्रह्म मन्त्राणां कर्मणां च स्थूलं विश्वं सूक्ष्मं परतत्वं च विज्ञाय मानवः विदित-वेदितव्यो भवति। सः शास्त्रेण न्यायं आचारेण धर्मं च अभिरक्षति। सत्यान्नप्रमाद्यति कुशलाच्च। भूत्यै स्वाध्याय प्रवचनाभ्यां च न प्रमदितव्यं, एवमेव देव-पितृ कार्याभ्यां। मातृ-पितृ-आचार्य अतिथिदेवो भवति। अनवद्यानि कर्माणि उपासते। विचिकित्सितेषु कर्मसु धर्मकामानां युक्तानां अलूक्षानां पन्थानमनुवर्तते। एवं अनुशासनं संप्रदायेन प्रवर्तितम्। सर्वे सुखिनः भवन्तु। अहमपि कर्मसु तरस्वी, अध्यात्मविकासेन तेजस्वी, ज्ञानविज्ञानैः ओजस्वी, आत्मनिग्रहेण योगाभ्यासेन च मनस्वी भूयासम्। अस्यै सिद्ध्ये सर्वाणि शास्त्राणि, सर्वे उपायाः अध्येतारः अध्यापकाश्च अभिसमायान्तु। एवं आचार्याणां गुरुकुलाधिगता ज्ञानज्योतिषः प्रभाकिरणा वाचा निरूपिताः। अतः परं किं अभिवांछितम्? तथापीदमस्तु—शंनो मित्रः।

७

तुहिनगिरेः मध्यप्रदेशे स्थितात् सनत्कुमाराश्रमदागतोऽहं। तत्र भवतः पवित्रतपस्यार्थान् वाङ्मात्रेण आराधयिषामि। एकदा नारदः सनत्कुमारं

धीहि भगवः इत्याससाद । आचार्यः यद्वेत्थ तेन मोपसीद तत ऊर्ध्वं वक्ष्या-
मीत्याह । नारदः स्वाधीतं शास्त्रजातं चतुर्दशविधं इति श्रावयामास । परंतु
तं भगवद्दृशेभ्यः "तरतिशोकमात्मवित्" इति । इमानि शास्त्राण्यधीत्यापि
शोचामि । तं मां भगवान् शोकस्य पारं तारयतु ।

आचार्याः एवमाहुः वेदादीनि शास्त्राणि केवलं नाममात्रम् । ततो भूयः
बहूनि तत्वानि सन्ति । वाक्, मनः, संकल्पः, चित्तं, ध्यानं, विज्ञानं, तेन बलं,
अन्नं, आपः, तेजः आकाशः, स्मरः आशा, प्राणः, एतान् प्रत्येकशः ब्रह्मेति
ये उपासते सः सत्यमधिगच्छति । अथ मनुते, ततः श्रद्दधाति, अनन्तरं
निस्तिष्ठति, ततः करोति । यत्र नान्यत्पश्यति, नान्यत् शृणोति, नान्यद्विजा-
नाति सः भूमा यत्रान्यत् पश्यति, अन्यद्विजानाति, अन्यत् शृणोति तदल्पम् ।
तत्स्वे महिम्नि प्रतिष्ठितम् । एवं पश्यन् आत्मामिथुनः आत्मानन्दः सः
स्वराट् भवति इति मृदितकषायाय नारदाय भगवान् सनत्कुमारः तमसः पारं
दर्शयत् ।

अस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म वर्तते । तस्मिन्नंतराकाशः, तदन्वे-
ष्टव्यम् । अस्मिन् कामाः समाहिताः सर्वं अस्मिन्नेव समाहितम् । एष आत्मा
अपहतपाप्मा विजरो विमृत्युः विशोको विजिघत्सो अपिपासः सत्यकामः
सत्यसंकल्पः । यथा अस्य इहकर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो
लोकः क्षीयते । एते सत्याः कामाः अनृतापिधानाः । एषसंप्रसादो जीवः
अस्मात् शरीरात् समुत्थाय परं ज्योतिरुप संपद्य स्वेन रूपेण अभिनिष्पद्यते ।

इमान् अर्थान् अधिगन्तुं पूर्वं देवासुराः उभये प्रजापति सकाशं जग्मुः ।
द्वात्रिंशद्वर्षाणि ब्रह्मचर्यं ऊषुः । प्रथमं प्रतिबिम्बमेव आत्मेति प्रपेदिरे । असुराः
शान्त हृदयाः प्रवव्रजुः । देवाः पुनः नवयं अत्र भोग्यं पश्यामः इति अप्राक्षन् ।
पुनः ब्रह्मचर्यं द्वात्रिंशद्वर्षाणि उषित्वा स्वप्नसुषुप्त्यवस्थाः विमृश्य अपराणि
... वर्षाणि ब्रह्मचर्यमुषित्वा पुनः प्रजापतिं प्रार्थयित्वा अन्ते पञ्च ...

चर्यं उषित्वा आत्मस्वरूपं अधिजग्मुः। तानि आहत्य एकशत वर्षाणि ब्रह्मचर्यं ऊषुः इंद्ररहस्यमधिगन्तुम्।

इदं ब्रह्मज्ञानं परंपरया अधिगतं तीर्थेभ्यः वितरन्, यावदायुषं ब्रह्मलोकं अभिसंपद्यते नचपुनरावर्तते।

श्वेतकेतुः ओजस्वी बालकः आसीत्। तं पितोवाच श्वेतकेतो अस्मत्कुलीनः अननूच्य ब्रह्मबन्धुरिव न भवति। अतः गुरुकुले ब्रह्मचर्यं चर, अधीष्व इत्यादिशत्। सः द्वादशवार्षिकः गुरुकुले अधीत्य चतुर्विंशति वर्षः प्रत्याजगाम। तं पिता उवाच—येनाश्रुतं श्रुतं भवति, अविज्ञातं विज्ञातं भवति, उततमादेशं जानासीति। श्वेतकेतुराह आचार्याः एव न अवेदिषुः यद्यवेदिष्यन् तर्हि कथं मे नावक्ष्यन्? भवानेव ब्रवीतु इति प्रत्युवाच।

श्वेतकेतो, शृणु विश्वमिदं नामरूपात्मकं मृत्पिंडेन यथा मृण्मयं ज्ञायते एवमेव मूलकारणविज्ञानेन कार्यजातमशेषं ज्ञायते। तत्कारणस्य स्वरूपं सदित्येके असदित्यन्ये वदन्ति। कथमसतः सज्जायेत? अग्रे इदं विश्वं अव्याकृतं, अद्वितीयं, एकमेव आसीत्। तद्ब्रह्म ऐक्षत् बहुस्यां प्राजायेय इति अनन्तरं अनन्तमुखमिदं विश्वं ससर्ज। इममर्थं दृष्टान्तैः उपपादयामि।

सौम्य! स्वप्नान्ते पुरुषः शकुनिः सूत्रेण प्रबद्धः यथा दिशं दिशं पतित्वा अन्यत्रायतनमलब्ध्वा बन्धनमेवोपाश्रयते एवं जीवात्मा प्राणमेवोपाश्रयते। तथैव प्रयतस्य वाङ् मनसि, मनः प्राणे, प्राणस्तेजसि, तेजः परस्यां देवतायां एकी भवति। ऐतदात्म्यमिदं सर्वम्। यथा मधुकृतः नानात्ययानां वृक्षाणां रसान् समवहारं एकरसं गमयन्ति। तत्र विवेकं न लभन्ते, अमुष्याहं वृक्ष्यस्य रसमिति। एवं सर्वे प्राणिनः सति संपद्य भेदं नविदुः। ते इह व्याघ्रोवा सिंहोवा मशकोवा यद्भवन्ति तदेव भवन्ति। जागृताः स्वस्वरूपं प्रतिपद्यन्ते।

यथा नद्यः समुद्रं प्राप्य भेदं न विदुः, पुनः वृष्टिरूपेण परिवर्तन्ते तथापि समुद्रादागच्छामः इति नविन्दन्ति। यथावृक्षस्य एकां शाखां अभ्याहन्यात् सा शुष्यति, द्वितीयां तृतीयां वा सर्वं वा यदि हन्यते तर्हि शुष्यति। जीवापेतं किल म्रियते नजीवोम्रियते नेदममूलं भवति।

अयं महान् न्यग्रोधः फले विद्यमानस्य सूक्ष्मबीजस्य अन्तःशून्यदेशे निहितरूपो अणिमा। यथा जले आसिक्तं लवणं न निभाल्यते मध्याद्वा अन्ताद्वा आचामन्। यथावा गान्धारेभ्यः अपिनद्धाक्षमानीय तं अतिजने विसृजेत्। अनंतरं स मेधावी अभिज्ञैः मार्गं उपश्रुत्य गान्धारानेव प्राप्नोति। एवमाचार्योपदेशेन तत्त्वं अधिगच्छति। पुरुषं उपतापिनं ज्ञातयः जानासि मां इति पर्युपासते, यावदस्य प्राणादीनि परस्यां देवतायां मज्जन्ति तावत् जानाति। अनन्तरं शान्तो भवति। नेदं असूलं भविष्यति। स्तेनमानीय अयं स्तेयमकार्षीत्, परशुमस्मै तपत इति वदन्ति। यदि स कर्ताभवति, तप्तं परशुं गृण्हाति, सः दह्यतेऽथ हन्यते। यदि तस्य अकर्ता भवति सत्यमात्मानं कुरुते। एताः प्रजाः सन्मूलाः सदायतनाः सत्प्रतिष्ठाः ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो।

अनुभवेन अध्यात्मविषयाधिगमे मुख्य प्राणस्य तथा प्राणानां च स्वरूपनिरूपणं अधिगमश्च अतिमुख्यः। प्राण एव ज्येष्ठः, श्रेष्ठश्च। अपानव्यानादयः तस्य भेदाः। वाक्, चक्षुः, श्रोत्रं मनश्च प्राणाधीनवृत्तयो भवन्ति। अनन्तरं मानवस्य जन्मविचारे सुविशदं ज्ञानं अभीप्सितम्। मरणविचारे अनन्तरं देवयानपितृयाने सम्यग्ज्ञाते श्रेयसे प्रभवतः। असौ लोकः, पर्जन्यः, पृथिवी पुरुषः, योषा च पञ्चाग्नयः। एतेषु सञ्चरन् उल्बावृतः गर्भात् दशमे मासि जातः यावदायुषं जीवति। पुनः प्रेतमेनं अग्नयः एव हरन्ति।

यः उपासकः प्रैति सः पक्षः-मास-संवत्सर-आदित्य-चन्द्र-विद्युत् मार्गं गच्छति ... अमानवः एतान् ब्रह्म गमयति। अयं

देवयानः पन्थाः। रमणीय चरणाः रमणीयां योनिमापद्यन्ते। कपूयचरणाः कपूयां योनिमापद्यन्ते।

जानश्रुतिः श्रद्धादेयः बहुप्रदायी आवसथान् मापयाञ्चक्रे। सर्वतः आगताः जनाः मे अन्नं अत्स्यन्तु इति। एकस्यां रात्रौ संलपन्तौ हंसौ जानश्रुतिं तिरस्कृत्य रैक्वं प्रशशंसतुः। तं संलापं जानश्रुतिः उपशुश्राव। परेद्युः क्षत्तारमाहूय कोयं रैक्वो नाम? अन्विष इत्याज्ञापयत्। सः अन्विष्य रैक्वमुपलभ्य प्रत्येयाय। अनन्तरं जानश्रुतिः गवां षट्शतं अश्वतरीरथं दुहितरंच आदाय तं प्रति जगाम। रैक्वः तत्वं उपदिदेश।

सत्यकामो जाबालः मातरं पप्रच्छ। किं गोत्रोहमिति? नाहं वेद तात यद्गोत्रस्त्वं इति। बह्वहं चरन्ती परिचारिणी यौवने त्वामहं अलभे। त्वं सत्यकामः अहं जाबाला इत्याह। सः हारिद्रुमतं गौतमं प्राप्य ब्रह्मचर्यमुवास। सः चतुःशतं गावः निराकृत्य नासहस्रेणावर्तेय इत्याज्ञापयत्। ताः अचिरेण सहस्रं संपेतुः ततः अग्निना ऋषभेण, प्रकृत्याच अध्यात्मविद्याममवाप। अतः आचार्याध्येवाधीता विद्या साधिष्ठं प्राप्नोति।

कामलायनः सत्यकामे जाबाले ब्रह्मचर्यं उवास द्वादशवर्षाणिअग्नीन् परिचचार। सः अन्यानन्तेवासिनः समावर्तयति एनं नावर्तयति। तं जायोवाच—तप्तो ब्रह्मचारी कुशलं अग्नीन् पर्यचारीत् प्रब्रूह्यस्मै इति। सः अप्रोच्यैव प्रवासां चक्रे। सः व्याधिनाग्रस्तः अनशितुं दध्रे। अनन्तरं अग्नयः येनमनुशशासुः। आचार्यः प्रतिनिवृत्य सौम्य ब्रह्मविदिव ते मुखं भवति। कोनुत्वां अनुशशास? इति। अनन्तरं सः अक्षिविद्यामुपदिश्य समावर्तयत्।

विश्वात्मकोपासने सर्वं मधुरिव भवति। सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासित। मनोमयः, भारूपः, सत्यसंकल्पः, आकाशात्मा; सर्वकामः,स र्वगन्धः, सर्वमिदमभ्याप्तो, अवाकी अनादारः। अस्य साधकस्य

यानि चतुर्विंशति वर्षाणि तत्प्रातः सवनम् । यानि चतुश्चत्वारिंशद्वर्षाणि तन्माध्यंदिनं सवनम् अष्टाचत्वारिंशद्वर्षाणि सायं सवनम् । अयं यज्ञ एव ब्रह्मेत्युपासीत । तद्ब्रह्म वाक्, प्राणः, श्रोत्रादि रूपेण इत्यनुशासनम् ।

ॐ इत्येतदक्षरमुद्गीथमुपासीत । सर्वं तस्योपव्याख्यानम् । भूतानां, पृथिवी, आपः, ओषधयः, पुरुषः, वाक्, ऋचः, सामानि, साम्नः उद्गीथो रसः । सामानि हिंकारः, प्रस्तावः, उद्गीथः, प्रतीहारः, निधनं इति । तथैव सप्तभेदाः हिंकारः, प्रस्तावः, आदिः, उद्गीथः,प्रतिहारः,उपद्रवः, निधनमिति । सर्वेषु ऋतुषु प्रातर्माध्यंदिन सायान्हेषु च ऋग्यजुः सामाथर्वसु परमात्मनि च उद्गीथ दृष्ट्या उपासीत । एवं उद्गीथं अक्षरेषु सामगानाक्षरेषु च ध्यायीत ।

न केवलं मानवाः तिर्यञ्चोपि पूर्वसंस्कारेण संस्कृताः प्रणवं उपासांचक्रिरे । उद्गीथ एव प्रणवः प्रणव एव उद्गीथः । एवं सार्वभौमदृष्ट्या उद्गीथोपासनं प्रणवोपासनं च नानामुखं उपदिष्टम् । अस्योपासकस्य त्रयो धर्मस्कन्धाः यज्ञोऽध्ययनं दानमिति । प्रथमः तपएव, द्वितीयः ब्रह्मचर्यम् । तृतीयः अत्यन्तमात्मानं आचार्य कुले अवसादयनं सर्व एते पुण्यलोका भवन्ति । ब्रह्मसंस्थोऽमृतत्वमेति ।

## ८

अगस्त्यमुनेः चरणविन्यासपवित्रीकृतप्रदेशात् कन्याकुमारी क्षेत्रात् आगतोहम् । विश्लेषित प्रकृतिपुरुषविवेकानां तत्रभवतां सन्निधौ किञ्चिद्विद्याध्यात्मविषयान् निवेदयितुमिच्छामि । शुक्लयजुः शाखाध्यायिनां गुरुकुले चिरं उषितवानस्मि । यत्र बहून् विषयान् बहवः छात्राः अधिजिगमिषन् अभ्यगच्छन् । तत्र गुरुभ्यःकथानकानि प्रयोगमुखेन उपदेशान् स्वानुभवदृष्टान्तान् तीर्थेभ्यश्च अश्रौषम् । तेषां कतिपयेषां संक्षेपेण इदानीमुपहारीकरोमि ।

देवाः असुराः मनुष्याश्च प्रजापतौ पितरि ब्रह्मचर्यमूषुः । उषित्वा देवा ऊचुः ब्रवीतु नो भवानिति । तेभ्यो प्रजापतिराह "द" इति । व्यज्ञा-

ष्टा ? इति पृष्टाः, व्यज्ञासिष्मेत्यवोचन् । दाम्येतेत्यात्थ इति देवाः, दत्तेत्यात्थ इति मनुष्याः, दयध्वं इत्यात्थ इति दानवाश्च ऊचुः । सैषा दैवीवाक् तां इदानीमपि मेघः अनुवदति "दददद" इति एतेन प्रकृत्या दाम्यत दत्त दयध्वमिति शिक्षेत् । एवमेव विद्युत् ब्रम्हेत्युपासीत । वैश्वानरं ब्रह्म, अन्नं ब्रम्हेत्येके, अपरे गायत्री ब्रम्हेति च उपासंते । एवं उपासना बहुधा निरूपिता ।

एकदा याज्ञवल्क्यः जनकमाजगाम । जनकः याज्ञवल्क्यं पप्रच्छ । यत्ते कश्चिदब्रवीत् तच्छ्रृणुवामेति । याज्ञवल्क्य आह मातृमान् पितृमान् आचार्यवान् वेद । तथा वाक्, मनः, चक्षुः, श्रोत्रं, हृदयं च, ब्रम्हेति प्रतीकोपासनानि विशदीचकार । पुनरप्येकदा याज्ञवल्क्यः जनकं पप्रच्छ किं ज्योतिरयं पुरुषः ? बहून् दृष्टान्तानुपादाय अत्रायं पुरुषः स्वयं ज्योतिर्भवतीते । अत ऊर्ध्वं विमोक्षाय ब्रूहि इति पृष्टः पुनराह ततः स्वप्न सुषुप्ती विशदीचकार ।

अनन्तरं अयमात्मा ब्रम्ह, विज्ञानमयः यथाकारी, यथाचारी, साधुकारी साधुर्भवति । पापकारी पापी भवति । पुण्यः पुण्येन कर्मणा पापः पापेन । एतमेवं विदित्वा मुनिः भवति । एतमेव प्रव्राजिनः लोकमनिच्छन्तः प्रव्रजन्ति । पूर्वे विद्वांसः पुत्रैषणायाश्च, वित्तैषणायाश्च, लोकैषणायाश्च व्युत्थाय अथ भिक्षाचर्यं चरंति । एषनेति नेत्यात्मा अगृह्यो नहि गृह्यते, अशीर्यो नहि शीर्यते, असंगो नहि सज्जते, असितो नव्यथते नरिष्यति । तस्मात् एवं वित् शान्तोदान्तः उपरतः तितिक्षुः आत्मन्येवात्मानं पश्यति ।

याज्ञवल्क्यस्य द्वे भार्ये बभूवतुः । मैत्रेयी कात्यायनीति । कात्यायनी स्त्री प्रज्ञैव आस । मैत्रेयी ब्रह्मवादिनी बभूव । याज्ञवल्क्य आह-प्रव्रजिष्यन् वा अरे अहमस्मादाश्रमादस्मि । तेनानया कात्यायन्या अन्तं करवाणि । मैत्रेयी उवाच,–यदि भगवन् इयं सर्वा पृथिवी वित्तेन पूर्णा स्यात् तेनाहं अमृतास्यां ? इति । याज्ञवल्क्य आह अमृतत्वस्य नाशास्ति वित्तेन । यनाहं अमृतास्यां तदेव भगवन् विधेहि इति मैत्रेयी प्राह । याज्ञवल्क्यः उवाच

व्याख्यास्यामि निदिध्यासस्व, पतिः, जाया, पुत्राः, वित्तं, पशवः, ब्रह्म च आत्मनः कामाय प्रिया भवन्ति। न तु तेषां कामाय। आत्मा वा अरे द्रष्टव्यः श्रोतव्यः, मन्तव्यः, निदिध्यासितव्यः, मैत्रेयी!। आत्मनि दृष्टे श्रुते, मते, इदं सर्वं विदितम्।

जनकः बहुदक्षिणेन यज्ञेन ईजे। जनकस्य जिज्ञासा बभूव। कस्विदेषां ब्राह्मणानां वरिष्ठः? इति। सः गवां सहस्रमवरुरोध। दश दश पादाः एकैकस्याः शृङ्गयोः आबद्धाः बभूवुः। तानुवाच ऋषिभोः भगवन्तः योवो ब्रह्मिष्ठः स एताः गाः उदजताम्। ते ब्राह्मणाः न दधृषुः। याज्ञवल्क्यः शिष्यमाह, सामश्रव! एताः गाः उदज इति। ते ब्राह्मणाः चुक्रुधुः। याज्ञवल्क्य त्वं ब्रह्मिष्ठोऽसि? सहोवाच, नमो वयं ब्रह्मिष्ठाय कुर्मः गोकामा एव वयमिति तं होताश्वलः प्रष्टुं दध्रे।

अथ जारत्कारवः आर्तभागः पप्रच्छ। अथ भुज्युः लाह्यायनिः, ततः उपस्तश्चाक्रायणः पप्रच्छ। यत्साक्षादपरोक्षात् ब्रह्म तन्मे व्याचक्ष्वेति। एष आत्मा सर्वान्तरः न दृष्टेः द्रष्टारं पश्येः, नश्रुतेः श्रोतारं शृणुयाः, नमतेः मन्तारं मन्वीथाः। न विज्ञातेः विज्ञातारं विज्ञानीयाः, एष आत्मा सर्वान्तरः। अतोऽन्यदार्तम्। अथ कहोलः कौषीतकेयः पप्रच्छ। पुनः गार्गी वाचक्नवी, उद्दालकः आरुणिश्च पप्रच्छतुः अन्तर्यामिणं ब्रूहीति। यः पृथिव्यां तिष्ठन् पृथिव्याः अन्तरः, यं पृथिवी न वेद, यस्य पृथिवी शरीरं, यः पृथिवीं यमयति एष ते अन्तर्यामी अमृत एवमेवाप्सु, अग्नौ, अन्तरिक्षे वायौ, दिवि, आदित्ये, दिक्षु, चन्द्रतारके, आकाशे, तमसि, तेजसि सर्वेषु भूतेषु, प्राणे, वाचि, चक्षुषि, श्रोत्रे, मनसि, त्वचि, विज्ञानेपि द्रष्टव्यम्। अदृष्टो द्रष्टा, अश्रुतः श्रोता, अमतो मन्ता, अविज्ञातो विज्ञाता, एष ते आत्मा अन्तर्याम्यमृतः। यत्रहि द्वैतमिव भवति तदितर इतरं पश्यति, इतर इतरं शृणोति, इतर इतरं विजानाति,। यत्रतु सर्वमात्मैवाभूत, तत् केनकम्पश्येत्? केन कं शृणुयात्? केन कं विजानीयात्? इति।

पुनः वाचक्नवी प्रश्नयुगलं अप्राक्षीत् । एतस्य वा अक्षरस्य प्रशासने गार्गि विश्वं विधृतं तिष्ठति इति निगमनं विदधे याज्ञवल्क्यः । अनन्तरं शाकल्यः पप्रच्छ । एवमनेके पण्डिताः याज्ञवल्क्येन पराभूता बभूवुः ।

# भगवद्गीता रूपकम्

॥ मङ्गलाचरणम् ॥

" नारायणं नमस्कृत्य,
नरंचैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं,
ततो जयमुदीरयेत् ॥ "

## ॥ विष्कंभः ॥

भोः भोः पौराः ! समाहिताः भवत, समाहिताः भवत । अयमत्र धृतराष्ट्रो महाराजः समरभूमेः प्रतिनिवृत्तात् संजयात् युद्धवार्ता शृण्वन्नास्ते । कष्टं भोःकष्टम् । एतावत्पर्यन्तं महाराजः पुत्राः रणे जेष्यन्ति, नगरं प्रति निवर्तन्ते; तत्र भवान् दुर्योधनः मूर्धाभिषिक्तो भविष्यति इति प्रत्याशया भूगोलविस्तारं

डवसुखेन शृण्वन् भावनांबरविहारी आसीत्। किं करोतु! इदानीं सर्वं
थोत्तरं संजातम्। अस्मिन्नरमेधे, ज्ञातिसंगरे, महान् विप्लवः संपद्यते
नवजातेः हानिः, कुरुवंशस्य अपयशः, निरपराधिनां मारणं, अभिमतानां अभो-
तिः, अनिन्द्यमानानां वैरं, एवमादि अनेकमुखाः विपदः बोभूयन्ते इति वारं
रं प्रतिबोधितः महाराजः भिन्नैः ज्ञातिभिः हितैषिभिश्च। किं बहुना! तत्र
वद्भ्यां देवकीसुत-कृष्णद्वैपायनाभ्यां अनिशं अस्य घर्षणनिवारणाय मानव-
त्या निर्वहणीया उपायाः सर्वे निरवशेषिताः किल? सर्वं मूढग्राहेषु महाराजस्य
त्रेषु निष्फलमभूत्। हन्त! पूर्वमेव तत्र भगवान्व्यासः, महाराज! मां न
णोषि, अन्ते अनेन कर्मणा तप्स्यसे। आचन्द्रार्कं कुरुवंशस्य कीर्तिकलंकभूतं
ां निन्दन्ति जनाः। इति निपुणं आह। अहं इमां भवदीयान्वयस्य
थां लिखामि। भविष्यति काले अस्याः कथायाः मननेन जनाः धर्मं अर्थं
मं च यथाक्रमं परस्परं अनतिरेकेण उपसेवन्तु। इति वारं वारं प्रत्यबोध-
त्। वयं केवलं कर्मचारिणः भगवतो देवकीसुतस्य तथा वेदव्यासस्य च उप-
देशवाक्यानि श्रुत्वा श्रुत्वा तान्येव स्मारं स्मारं किंचिदिव विकासमापन्नाः। ननु
भयोरुपदेशः पाषाणहृदयेषु एषु कुरुषु किमपि परिवर्तनं अंकुरयामास।
ततः वेदव्यासः धृतराष्ट्रस्य विश्वासमुपजनयन्, भो महाराज! यद्यपि युद्धं
भविता भवतां सौख्येण। दिव्यदृष्टिं ते ददामि। भवानेव स्वयं दारुणं ज्ञाति
मारणं, तव नेत्रपारणं यथा भवति तथा पश्य, इति निर्विण्णः जगाद।
महाराजः तत्रापि चतुर एव। अहं न द्रष्टुमिच्छामि, परन्तु विषयं ज्ञातुं
इच्छामि, अन्यस्मै देहि, सः कथयतु, अहं शृणुयाम्, इत्यवोचत्। तदा
ज्ञानी व्यासः प्रामाणिकं, मित्रं, कृतविद्यं, सात्त्विकगुणैरुपेतं, गावल्गणिं,
कार्यं तस्मै दिव्यदृष्टिं ददौ। श्रीमान् संजयः भगवतः अनुरोधेन समरभुवं-
गत्य प्रकटान् प्रच्छिन्नांश्च विषयान् करबदरसमानं अधिगम्य प्रतिनिवृत्तः महा-
राजाय इदानीं दारुणां कथां निवेदयति। वयं अदृष्टहीनाः तामपि कथां शृण्वन्तः
दूयामहे। कथनाम भीष्मो पपात, द्रोणो ममार, दुर्योधनो हतः, कर्णं अद्य-
न्, अश्वत्थामा [illegible] इत्यादि अशनिपातसदृशानि वाक्यानि न

खेदाय भवेयुः ?। विधिः अनतिक्रमणीयः। इतः परं नजाने भगवन् भूमेः भारतस्य निरपराधिभ्यः प्रजाभ्यः राजर्षिवंशस्य अस्यच आयतिम्। भवतु याव-दहं स्वनियोगमनुतिष्ठामि।

इति विष्कम्भः

## ॥ द्वितीय दृश्यम् ॥

धृतराष्ट्रः :— संजय! मत्पुत्राः तदनुयायिनः, पाण्डवाः तेषां अनुयायि-नश्च युयुत्सवः अभूवन्; ते समराय धर्मक्षेत्रे कुरुक्षेत्रे समवेताः बभूवुः। अनन्तरं ते किमकुर्वत ?।

संजयः :— उभयपक्षयोः अनीकं व्यूढमासीत्। पाण्डवानां पक्षे सप्त अक्षौहिणी सेना संघटिता अवर्तत। त्वदीयानां पक्षे एकादशाक्षौहिणी सेना सज्जिता। तदा तवपुत्रो दुर्योधनः पाण्डवानीकं दृष्ट्वा द्रोणमुपगम्य एवं न्यवे-दयत्। आचार्य! तवशिष्येण धीमता धृष्टद्युम्नेन व्यूढां महतीं इमां पाण्डु-पुत्राणां चमूं पश्य। अस्यां सेनायां युधि भीमार्जुनसमाः शूराः महेष्वासाः राजन्ते। ते वीर्यवन्तः, नरपुङ्गवाः महारथाश्च। तेषु सौभद्रादयः द्रौपदेयाश्च विशेषेण अत्र गणनां अर्हन्ति : मम सैन्ये ये विशिष्टाः संज्ञार्थं तान् ब्रवीमि। भवान् तान् निबोधतु। अश्वत्थामादयः भीष्मादयश्च नाना शस्त्रप्रहरणाः युद्धविशारदाः वर्तन्ते। अन्ये बहवः शूराः मदर्थे त्यक्तजीविताः। एवं स्थिते भीष्माभिरक्षितं अस्माकं बलं पाण्डवैः सह योध्दुं अपर्याप्तमिति भावये। भीमा-भिरक्षितं पाण्डवानां बलं अस्माभिः सह योध्दुं पर्याप्तमित्युपलक्षये। तस्मात् यूयं सर्वेषु अयनेषु यथाभागमवस्थिताः भूयास्त। भवन्तः सर्वएव सर्वदा सर्वथा भीष्ममेव अभिरक्षन्तु इति।

धृतराष्ट्रः :—सञ्जय, सम्यगाह कुमारः, सम्यगाह कुमारः ।

संजयः :— एतस्मिन् अन्तरे पितामहो भीष्मः दुर्योधनस्य हर्षं संजनयन् सिंहनादं उच्चैर्विनद्य शंखं दध्मौ । सेनान्तरे भीष्मस्य सिंहनादमुपश्रुत्य योधैः शङ्खाः भेर्यः पणवाः आनकाः गोमुखाश्च सहसैव अभ्यहन्यन्त । अनेकानां शब्दानां युगपदाविर्भावे स शब्दः तुमुलः अभवत् । ततः श्वेतहयैर्युक्ते स्यन्दने स्थितौ माधवपाण्डवौ शङ्खौ प्रदध्मतुः । एवं अन्ये राजानोपि पृथक् पृथक् स्वीयान् शङ्खान् दध्मुः । स घोषः तुमुलः नभः पृथिवीं चैव अनुनादयन् मम पुत्राणां हृदयानि व्यदारयत् । अनन्तरं अर्जुनः समराय व्यवस्थितान् स्वीयान् ददर्श ।

—❀—

## || तृतीयदृश्यम् ||

अर्जुनः :—कृष्ण ! इमं युयुत्सुं समुपस्थितं स्वजनं दृष्ट्वा मम गात्राणि सीदन्ति । मुखं परिशुष्यति । शरीरे वेपथुः रोमहर्षश्च जायते । हस्तात् गाण्डीवं स्रंसते । त्वक् च परिदह्यते । स्थातुमपि न शक्नोमि । मे मनः भ्रमतीव वर्तते । विपरीतानि निमित्तानि पश्यामि । गोविन्द ! विजयं न कांक्षे । राज्यं नेच्छामि । सुखानि न रोचन्ते । राज्येन किं प्रयोजनम् ? भोगैर्वा जीवितेनवा किम् ? । येषामर्थे, राज्यं, भोगाः, सुखानि च कांक्षितानि ते इमे युद्धाय अवस्थिताः । अपि त्रैलोक्यराज्यहेतोः एतान् हन्तुं नेच्छामि महीकृते किमेतान् हन्याम् ? धार्तराष्ट्रान् निहत्य का प्रीतिः स्यात् । परन्तु एते आततायिनः । एतान् हत्वा अस्मान् पापमेवाश्रयेत् । स्वजनं हत्वा कथं सुखिनः स्याम ? । तस्मात् वयं एतान् हन्तुं नार्हाः । यद्यपि लोभेन उपहतचेतसः एते । मित्रद्रोहे कुलक्षये च दोषं पातकं च न पश्यन्ति । वयं पुनः अस्मिन् समरे कुलक्षयकृतं दोषं

पश्यामः । पश्यन्नपि दोषं सुविशदं तस्मिन्नेव कथं प्रवर्तामहे ? कुलक्षये सनातनाः कुलधर्माः प्रणश्यन्ति । नष्टे धर्मे कृत्स्नं कुलं अधर्मः अभिभवति । अधर्माभिभवात् कुलस्त्रियः प्रदुष्यन्ति । स्त्रीषु दुष्टासु वर्णसंकरः जायते । अयं संकरः कुलघ्नानां कुलस्य च नरकाय भवति । एषां पितरः लुप्तपिण्डोदकक्रियाः पतन्ति । शाश्वताः कुलधर्माः जातिधर्माश्च वर्णसंकरकारकैः एतैः उत्साद्यन्ते । मनुष्याणां उत्सन्नकुलधर्माणां नरके वासः नियतः भवति इत्यनुशुश्रुम । फलतः अशेषस्य समाजस्य हानिर्भवति । अहो ! बत !! वयं राज्यसुखलोभेन स्वजनं हन्तुमुद्यताः । महत्पापं कर्तुं व्यवसिताः इदमसमञ्जसं यदि एते शस्त्रपाणयः अशस्त्रं अप्रतीकारं मां रणे हन्युः मे तदेव क्षेमतरं भवेत् ।

कृष्णः :—अर्जुन ! अस्मिन् विषमे समये इदं कश्मलं त्वां कुतः समुपस्थितम् ? । भवतः इदं व्यसनं अकीर्तिकरं, अस्वर्ग्यं, अनार्यजुष्टं च । त्वयि इदं क्लैब्यं नोपपद्यते । क्षुद्रं हृदयदौर्बल्यं त्यक्त्वा उत्तिष्ठ ।

अर्जुनः :—कृष्ण ! संख्ये भीष्मं द्रोणं च अहं इषुभिः कथं प्रतियोत्स्यामि । ते पूजार्हाः किल ? अस्मिन् लोके महानुभावान् गुरून् अहत्वा भैक्षमपि भोक्तुम् श्रेयः इति मन्ये । अथवा अस्मिन् समरे गुरून् हत्वा तद्रुधिर प्रदिग्धान् कथं भुञ्जीय ? अनयोः कतरः गरीयान् ? इति न विद्मः । यद्वा जयेम यदि वा नो जयेयुः । यानेव हत्वा न जिजीविषामः तएव धार्तराष्ट्रा प्रमुखे अवस्थिताः । अतः धर्मसम्मूढचेताः कार्पण्यदोषेण उपहतस्वभावः अस्मि । अत्र यच्छ्रेयः इति त्वामेव पृच्छामि । निश्चितं यच्छ्रेयः तन्मे ब्रूहि । अहं ते शिष्योऽस्मि ; प्रपन्नं मां शाधि ।

कृष्ण :— अर्जुन ! एते भीष्मादयः सर्वदा सर्वथा अशोच्याः ; एतान् अन्वशोचः ? पण्डिताः गतासून् अगतासून्वा नैव अनुशोचन्ति । मानवस्य यथा कौमारं यौवनं जरा च क्रमशः संभवंति तथैव देहान्तरप्राप्तिरपि । अयं जीवात्मा न जायते न म्रियते । कुतः ............... पुरातनः ............... हन्य-

माने शरीरे न हन्यते। यथा जीर्णानि वासांसि त्यजन्ति नवानि गृण्हन्ति; तथैव देहान्तरप्राप्तिः। अथ एवं मनुषे? अयं नित्यजातः नित्यं वा म्रियते इति तथापि नैव शोकस्थानं–जातस्य मृत्युः ध्रुवः। मृतस्य जन्म च ध्रुवमेव। किं च स्वधर्ममपि अवेहि स्वभावेन क्षत्रियस्त्वं, युद्धात् श्रेयः क्षत्रियस्य अन्यत् नास्ति; एतावत्पर्यन्तं महारथाः भवंतं पराक्रमिणं विदुः। यदि संग्रामं त्वं न करिष्यसि भयात् रणात् त्वां उपरतं मंस्यन्ते इयमकीर्तिः तव मरणादतिरिच्यते; अतः हतो वा स्वर्गं प्राप्स्यसि; जित्वावा महीं भोक्ष्यसे। तस्मात् कौन्तेय! युद्धाय उत्तिष्ठ!!

अर्जुनः :—कृष्ण! धर्मसम्मूढचेताः अस्मि; अत्र उपायं ब्रूहि।

कृष्णः :—अर्जुन! पुरा सर्वेषां कर्मणां सिद्धये पञ्च कारणानि मया प्रोक्तानि; तानि निबोध। मानवः न्याय्यं अन्याय्यं वा कर्म करोति; तत्र पञ्च कारणानि संभूय प्रत्येकं कर्म निर्वर्तयन्ति। एतानि पञ्चकारणानि अनुभवन्त्यपि न जानन्ति चर्मचक्षुषः। इदं शरीरं अधिष्ठानं; प्रथमं कारणं; जीवात्मा द्वितीयं, इन्द्रियाणि तृतीयं, पृथक् चेष्टाः चतुर्थम्, दैवं पञ्चमम्। वस्तु-स्थितौ सत्यामेवं अहमेव करोमि मया कृतम् इति अकृतबुद्धयः विश्वसन्ति। अतः एवं कर्माणि भावय। पापं वा पुण्यं वा अनया दिशा विचारय। यस्य अहंकृतो भावः नास्ति, बुद्धिश्च न लिप्यते सः लोकान् हत्वापि न हन्ति बध्यते च। इदमेव कर्मसु कौशलं, अयमेव योगः।

अर्जुनः :— भगवन्! "पुरा मयाप्रोक्तं" इति कथयसि त्वंतु मम समकालीनः। त्वं आदौ प्रोक्तवानिति कथं विजानीयाम्?।

कृष्णः :—अर्जुन! बहूनि जन्मानि तव मम च व्यतीतानि। तानि सर्वाणि अहं वेद त्वं न वेद इयान् विशेषः। सत्वं रजः तमः इति गुणाः प्रकृतिसम्भवाः वर्तन्ते। एभिर्गुणैः सम्मूढः गुणेषु सजते। अतः ज्ञानी

अकृत्स्नविदः तान् न विचालयेत्। पश्य मम कर्तव्यं किमपि नास्ति आसक्तं वा, तथापि सर्वाणि कर्माणि करोमि। अयं क्रमः लोकसंग्रहाय युज्यते ननु स्वार्थाय।

गुणानां स्वभावः क्रियानिर्वर्तनम्। यदा पुमान् गुणानां विलासं सुविशदं प्रतिपद्यते तदा स्वात्मानं अकर्तारं साक्षात् करोति।

उदासीनवदासीनः समदुःखसुखश्च यः आस्ते, सः गुणातीत इत्युच्यते। धीमान् साधकः प्रलपन् विसृजन् उन्मिषन् निमिषन्नपि स्वात्मानं अकर्तारं मनुते।

त्वमिदानीं मोहात् न योत्स्ये इति यद्वदसि तव अयं व्यवसायः मिथ्या। प्रकृतिः त्वां नियोक्ष्यति। यत्कर्म मोहात् कर्तुं नेच्छसि तत्कर्म अवशः करिष्यस्येव।

अर्जुनः :—भगवन्! तववचनानि गहनतराणि। मम अवगाहनपथं अतिक्रामन्ति। अतः कैः लिंगैः गुणान् अतीतं अधिगच्छेयम्? तन्मे सुविशदं विशदय।

कृष्णः :— अर्जुन! रहस्यं उपदिशामि। इदं प्रत्यक्षावगममस्ति। अस्य स्वल्पस्याप्याचरणे मानवः महतो भयात् त्रायते। सर्वैरपि अनुभूयमानं व्यवहारं प्रथमं उदाहरामि। मानवः प्रथमं जानाति; अनन्तरं इच्छति; ततः यतते, अन्ततः कर्म निर्वर्तयति। इदमेकं स्वरूपं कर्मणः। इदमेव अनुलोमेनापि अवगच्छ। कर्मनिर्वहणेन मनसि संस्कारः। संस्कारः भावना-रूपः मनोभावनाभिः प्रेरितः किल यतते। मनोभावनानां इच्छैव प्रेरणाशक्तिः। इच्छया प्रेर्यते मानवः। अस्या इच्छायाः कारणक्षेत्रमेव ज्ञानम्। तेनैव सर्वं जानाति। सर्वं ज्ञानरूपतामश्नुते-एवं प्रथमं ज्ञानं, अन्ततः कर्म, अयं अवतरण-मुखः ज्ञानकर्मणोः। कर्माणि पुनः प्रथमे आरोहणक्रमेण संस्काररूपेण, द्वितीये आशय रूपेण, तृतीये इच्छारूपेण अन्ततः ज्ञानरूपेण च परिवर्तन्ते। तस्मात्

ज्ञानकर्मणोः भेदो नास्ति। अनया दिशा ज्ञानाग्निः कर्माणि भस्मसात्कुरुते। प्रकृतेर्गुणैः क्रियमाणानि सर्वाणि कर्माणि यदा चिदात्मनि लीयन्ते तत् विभावय। तस्मात् बुद्धौ शरणं अन्विच्छ। गुणविलासभूतानि कर्माणि यः ज्ञानाकारेण पश्यति सः तत्त्वं वेद। गुणातीतश्च भवति। स एव युक्त इत्युच्यते। अयं स्थितप्रज्ञः पर्यभेदेन भिद्यते। इथं परिपाकावस्थायां ब्राह्मी स्थितिरिति गीयते।

अर्जुनः :—कर्म वा ज्यायसी ज्ञानं वा इति अध्यात्मचिन्तकाः संशेरते। त्वमिदानीं ज्ञानकर्मणोरभेदं वदसि। युद्धाय मां प्रेरयितुं त्वं मोहयसीव प्रतिभाति तस्मात् एकतरं निश्चित्य वद। येन अहं श्रेयः आप्नुयाम्।

कृष्णः :— ज्ञानं च कर्म च विभिन्ने इति वालाः वदन्ति। कदापि पण्डिताः अनयोर्भेदं नाभ्युपगच्छन् यः एकस्मिन्मुखे निष्ठावान् भवति, उभयोरपि फलं विन्दते। कर्माणि बहुमुखानि, विश्वव्यापारमेव कर्म, यज्ञरूपेण विभाति; मानवैः अनुष्ठीयमानानि सर्वाणि कर्माणि ज्ञानिभिः अभ्युपगतानि यज्ञभावं भजन्ते। एते द्रव्ययज्ञज्ञानयज्ञादिरूपेण बहुमुखाः वितताः इमे। मानवानां हिताय विहिताश्च। फलत्यागः, संगत्यागः, कर्तृत्वत्यागश्च कर्माचरणे उपायः। अनेन उपायेन कर्म न लिप्यते। विश्ववृत्तिराप्यायते, चेतः निर्मलीभवति; जीवात्मा गुणेभ्यः स्ववैशिष्ट्यं साक्षात्करोति। तदा विश्वात्मानं परात्मानं भावनया अधिगच्छति इयमेव भक्तिः। साधकः अन्यथा आत्मरतिः आत्मतृप्तश्च न भवति।

अर्जुनः :—केशव! इदमेव न जानामि, विश्वात्मा कः?। विश्वातीतः कः? आत्मा कः? इति। केषु केषु भावेषु सः विश्वात्मा चिन्त्यो भवति? इत्यमुं विषयं जिज्ञास्ये। अनेकधा आम्रेडितोऽपि अयं विषयः सुविशदं प्रतिपत्तुं अशक्यं इत्यनुशुश्रुम।

कृष्णः :—विषयासक्तानां अयं विषयः दुरवगाहः भवत्येव, सततं वश्याभिः उपायेनाधिगन्तुं शक्यते। विषयान् ध्यायतः संगः जायते; तत

कामः ; तदनुयायिनौ क्रोधलोभौ ; फलतः मोहः । तेन स्मृतिविभ्रमः । अनन्तरं बुद्धिनाशः इति चित्तनद्याः एकः प्रवाहः प्रवहति । अपरस्तु बाह्येन्द्रियनिग्रहः, ततः चेतोनियमनं, तस्मात् निगृहीतेंद्रियात् उपायात्-गुणातीतता ; ततः सर्वेषु भावेषु विराड्रूपस्य प्रतिपत्तिः ; इत्ययं शोभनः पन्थाः । सर्वव्यापिनं परात्मानं सर्वेषु भावेषु यः पश्यति सः परात्मभावं प्राप्नोति । क्षीणकल्मषाः ऋषयः इमं पन्थानं अनुजग्मुः । तेन ते अनादि-कालप्रवृत्तात् प्रकृतेः बन्धनात् मुमुचुः ।

अर्जुनः—भगवन् ! भवतः वचनानि अनन्तपाराणि वर्तन्ते, अप्यहं विराड्रूपं विश्वात्मानं पश्येयम् ? यदि शक्यमिति भवान् मन्यसे मे दर्शय ।

कृष्णः :— अर्जुन ! सर्वथा भवान् शक्तोऽसि, अर्हश्च । इह एकस्मिन् परवस्तुनि स्थितं कृत्स्नं जगत्पश्य । भीष्मादयः पूर्वमेव सर्वनियन्त्रा कालेन निहताः । त्वं निमित्तमात्रं भव । उत्तिष्ठ, यशोलभस्व, शत्रून् जय, राज्यं भुंक्ष्व ।

अर्जुनः :—मुकुन्द ! तव विश्वरूपं दृष्ट्वा आश्चर्येण भयेन च व्यथि-तोऽस्मि । अज्ञानात् प्रणयेन वा मया भवान् असत्कृतोऽसि । तानशेषान् अपराधान् क्षमस्व । भवतः सान्निध्यात् वात्सल्याच्च विश्वरूपमपश्यम् । सामान्यानां ईदृशं सौभाग्यं कथं लप्स्यते ? तेषां का गतिः ? ।

कृष्णः :—अर्जुन ! दुराचारोपि अनन्यभाक् परात्मानं यदि भजते सः युक्ततमः भक्ताग्रेसरश्च विकासं विन्दते । यः मानवः अमानित्वं अहिंसा क्षान्त्यादि रूपान् आत्मगुणान् अभिवर्धयति सः अध्यात्मविकासमधिगच्छति । अयं पण्डितानां पन्थाः । अजानन्तः अन्येभ्यः श्रुत्वा उपासते तेपि मृत्युं तरंति ।

अर्जुनः :—माधव ! त्रिगुणातीतो भूयादिति भवता यदगादि तन्नाव-गच्छामि । तत् कृपया मे ब्रूहि ।

कृष्ण: :—सव्यसाचिन्! प्रत्यक्षावगममिति मया सूचितं सत्त्वप्रधाना:, रज:प्रधाना:, तम:प्रधानाश्च मानवा: त्रिधा विद्यन्ते। तेषां आहारा:, यज्ञा:, दानानि, तपांसि च विभिन्नानि स्वभावानुगुणेन भवन्ति। निष्ठा श्रद्धा च त्रिधा भिद्यते। त्वं सत्त्वगुणप्रधानोऽसि। यद्यपि सर्वेषु सर्वे गुणा: विद्यन्ते। सात्विका: परहितमाचरन्ति, ते नियमेन सर्वदा सर्वभूतहिते रता: वर्तन्ते। राजसास्तामासाश्च स्वहिताय परेषां अहितमाचरन्ति। तत्त्वज्ञानिन: एतानतिरिच्यन्ते। ते सर्वाणि कर्माणि संगत्यागपूर्वकं निर्वहन्ति। संग-फलयो: त्याग: एव त्यागस्य शब्दार्थ:। संकल्पस्य त्यागएव सन्यास:। अत: सर्वेषु भावेषु परमात्मानं ध्यायस्व। स: सर्वेषां हृदये तिष्ठति। यन्त्रभ्रमणमिव सर्वभूतानि भ्रामयति। अल्पफलदान् सर्वधर्मान् त्यज। अनन्तफलदं परमात्मानं शरणं व्रज। तेन सर्वेभ्य: पापेभ्य: विमुच्यसे। पार्थ एकाग्रेण चेतसा मया यदुपपादितं भवता श्रुतं किम्? अज्ञानसंभूत: मोह: अपि नष्ट:?।

अर्जुन: :—कृष्ण! त्वत्प्रसादात् मोहो नष्ट:। स्मृति: लब्धा गतसन्देह: स्थितोऽस्मि। तववचनं करिष्ये।

## ॥ चतुर्थदृश्यम् ॥

सञ्जय: :—राजन्! केशवार्जुनयो: इमं संवादं स्मारं स्मारं मुहुर्मुहु: हृष्यामि। तथैव विश्वरूपं संभाव्य आनन्दं अनुभवामि। यस्मिन् पक्षे योगेश्वर: कृष्ण: धनुर्धर: पार्थ:, तत्र श्री:, विजय:, भूति: ध्रुवा नीतिश्च: इति मे मतम्।

सम्पूर्णम्

# त्यागराजः

इह खलु जगति अनादिकालात् ज्ञानिनः भक्ताश्च पण्डितान् पामरांश्च काले २ स्वीयोपदेशैरुद्बोधयन्ति, स्वजीवनदृष्टान्तेन, सन्मार्गे प्रेरयन्ति स्वीय महिमाविशेषेण अनितर साधारणं कार्यनिर्वहणसामर्थ्यं प्रदर्शयन्ति च। सामान्याः पुनः ज्ञानिनामपेक्षया भक्तानामनुभविनां च सन्दोहैनैव प्रभाविताः नीतिविशेषानाद्रियन्ते। भावनाशालिनो भविष्यन्ति। श्रद्धामयं जीवनं यापयन्ति। तत्र सर्वसम्मतं नीतिपन्थानं अनुसरन्तः विभिन्नपथानुयायिना मैकमत्यं च अर्थाद्‌दापद्यते। कृतभूरिपरिश्रमाः शास्त्रेषु सामान्यान् उद्बोधयितुं न प्रभवन्ति, परमेते भक्ताः, अनुभविनश्च अनुपदमेव जनमानसमन्दिरेषु प्रतितिष्ठन्ति! एतादृशभक्तेष्वन्यतमः श्रीत्यागराजः।

अयं महाशयः शालीवाहन शक वर्षाणां १६८२ तम बहुधान्य संवत्सरे भौतिकशरीरं संजग्राह। अयं आरुवेलनियोगि ब्राह्मणः, भारद्वाज गोत्रजः, आपस्तम्भशाखी, पितामहोऽस्य गिरिराज ब्रह्म। पिता रामब्रह्म। माता शान्ता देवी। भ्राता पञ्चनाथ ब्रह्म इति ऐतिहासिका ज्ञापयन्ति। कावेरी-प्रवाहसारिणीभिरुपप्लावित्ते तंजाऊरुमण्डले तिरुवारूरु ग्रामेऽस्य जन्म बभूव, यत्र अन्यौ द्वौ शामशास्त्री मुत्तुस्वामि दीक्षितौ वाग्गेयकवरौ जज्ञाते। बाल्ये संस्कृतमांध्रभाषां च संप्रदायेनाधीयानः मृदुमधुरकण्ठस्वरेण श्लोकान् गायति स्म। अस्य शारीरस्यातिलोकमाधुर्यं अधिगम्य गायकप्रवराः एनं गानशास्त्राभ्यासे संयोजयामासुः। बहव्यः कथाः अस्य महिमानमुपवर्णयिनु मिदानीमपि जनजनिताः उपलभ्यन्ते। अस्य गात्रं पटिष्टं, पूर्णनादाभिव्यक्तये समर्थमासीत्। जन्मना रामभक्तः, विरागी, गृहस्थाश्रमं स्वीकृत्यापि वानप्रस्थ इव जीवनं निनाय। अयं सगुणोपासना विषये स्वीयकृतीः सप्तशताधिक संख्याकाः रचयामास। विशेषेणआंध्रभाषायां, कतिपयकृतीः संस्कृतभाषायां

व ल्यवद्धं प्रणिनाय । विमर्शकाः पुनरेवं निश्चित्य वदन्ति । अयं महानुभावः पञ्चलक्ष्युत्तर एकशत रागेषु कृतीररीरचदिति । पुनः एताः कृतीः आत्म-सम्बोधनं भगवतो दिव्यमङ्गलविग्रहवर्णनं, सेवाविशेष निरूपणं नीतिबोधनं चेति उपदेशविशेषानालम्ब्य प्रवर्तिता वर्तन्ते । पण्डितैरादृतं शुष्क व्याकरण नियमं अयं कदाचिदुल्लंघयति । भगवतो गुणानुवर्णने भावावेशपूरितानि उद्गाराणि उपहारीकरोति । कृतौ, स्वरप्रस्तारे असामान्यं वैशिष्ट्यं ददर्श । शिष्येभ्यः तेषां शारीरधर्मं पुरस्कृत्य कृतीः उपदिदेश । तथैव सुषिरवाद्यपटू-नुद्दिश्य वाद्यैर्निर्वचनानुकूलान् स्वरविशेषान् संयोजयामास । किं बहुना अधिकारभेदमयं उपलक्षीकृत्य विभिन्नेषु रागेषु स्वराणां अभूतपूर्व संयोजनेन स्वीयनादोपासनासिद्धिं प्रादर्शयत् ।

त्यागराजस्वामी केवलं शुष्कतार्किकवत् विवादप्रस्तारान् न पर्यशील-यत् । आपि द्वैतं सुखम् ? अपि अद्वैतं सुखमिति प्रश्नानुद्भाव्य रामभजनमेव सुखतरमिति सरलया वाचा तादात्म्यं भगवता व्याचख्यौ । पदार्थानां भावनां रागभावेन संयोज्य एकस्मिन्नेव वाक्ये स्वराणां सन्यास–विन्यास–अपन्यास–न्यास भेदैः अनन्तप्रसरां भावनावैखरीं स्वयमभिव्यक्तीकृत्य लोकानशिक्ष-यत् । इयं वैखरी संगतिरिति गीयते । भक्ताग्रेसरः ऐश्वर्यं तृणमिव तिरश्चकार, राजाश्रयं नाङ्गीचकार । श्रीमतां राज्ञां चाश्रयेण जिजीविषतां नट–विट–गायकानां मनोधर्मं अशिक्षयत् । भगवदुपासनं विना गानस्य विकृतिं सिद्धान्ती चकार । अस्य समकालिकाः केचन राजवंशीयाः स्वातितीरुणालु प्रभृतयः अस्य प्रभावेण प्रभाविताः इव नादोपासनं भगवदुपासनं विदधुः । तत्तत्समयेषु स्वेनानुष्ठितं भगवदाराधनं स्वीयकृतिषु तत्र २ न्यरूपयत् । शुक इव विरागी अपि अनेकैः शिष्यैः सह वेङ्कटाद्रिप्रभृतीनि तीर्थक्षेत्राणि सिषेवे । अन्ततः तञ्जाऊर समीपे तिरुवेय्यार इति प्रथिते ग्रामे भगवन्तमर्चयन् परां निष्ठां ददृशत । भविष्यत्काल भावि स्वीयमरणमाकलय्य सप्ताहात्पूर्वमेव तुरीया-श्रमम[illegible] ... अस्य कृतयः कर्णाटान्ध्र-



भूमभङ्गीचकार । अन्ततः परां शान्तिमवाप

द्राविड – केरल मण्डलेषु अबलाबालगोपालैरपि गीयन्ते । वग्गेयकारेषु त्यागराजकृतिमन्तरा अभ्यासस्यावकाशो नास्ति । वैदुष्यस्य परिपूर्णतापि नावाप्यते । एवमयं रामभक्तः स्वीयकृतिभिः दक्षिणभारते जनसमुदायस्य हृदयान्यधितिष्ठति । अद्यापि प्रतिवर्षं एकदा गानशास्त्रे पण्डिताः तिरुवैय्यार क्षेत्रे सम्मिलित्वा त्यागराजस्याराधनां संमानयन्ति । बेङ्गलोरनागरत्नम्म इति प्रथिता काचन रमणी स्वीयसर्वस्वं तिरुवैय्यार क्षेत्रे त्यागराजस्वामिनां समाधि स्थले सौधनिर्माणय समर्पयन् । अनेन त्यागेन प्रभाविता बहवः अहमहमिकया अनेकमुखैरिदंक्षेत्रं अभिवर्धयन्ति । सर्वेषां यात्राक्षेत्रं विधास्यन्तो मोदन्ते ।

कावेरी तीरवासाय कारुण्यामृत वर्षिणे ।
अवनीसुर राजाय त्यागराजाय मङ्गलम् ॥

# प्रा र्थ ना

प्रकर्षेण अर्थ्यत इति प्रार्थना । प्रार्थना नाम विषयं सर्वत्र सर्वदा व्याप्त मेव उपलभामहे । स्वसमीहितं विषयं सप्रश्रयं यदि निवेदयामः तन्निवेदनं प्रार्थनारूपमन्वेति । अतश्च प्रवराणां सन्निधौ अवराणां प्रार्थना सर्वदैव जागर्ति । प्रवरैरुदीरितं वचनं अवरैः यद्यनुष्ठीयते निर्बन्धेन तदाज्ञारूपं भजते । प्रवराः यदि अवरस्य विज्ञापनां पूरयितुमिच्छन्ति अथवा पूरयन्ति तदा प्रार्थना सफला बभूवेति निश्चीयते । एवमाज्ञाप्रार्थनयोः अन्तरं सामीप्यं च दृश्यते ,

मानवाः विशेषेण देवताप्रार्थनां कुर्वन्ति । मन्त्रजपरूपेण–स्तोत्रपाठनरूपेण ध्यानादि साधनाभ्यासैश्च तत्त्वतः प्रार्थनामेवानुतिष्ठन्ति । उच्चैर्बुद्धि

शेन् प्रार्थना सामुदायिकी प्रकाशते। भगवान् बुद्धः समर्थरामदासादयः भक्ताश्च सामुदायिकप्रार्थनां बहुमन्यमानाः व्यतन्वन्। इयं प्रार्थना भजन-रूप मावहति। ग्रामेषु नगरेषु च भजनमन्दिराणि विद्यन्ते। तेषु संभूय जनाः गद्य-पद्य-कृति-गानरूपेण च दैवभजनमातिष्ठन्ते। भजनस्य परिपूर्णता गायकसंयोजनमन्तरा न संपनीपद्यते। तत एव श्रुत्यर्थं तांबूरीं लयवाद्यं मृदङ्गं सहायार्थं धनुर्वीणादि वाद्यानि च उपयुञ्जानाः भजनरसिकाः मोदन्ते। भजनावसरे न कोऽपि विषयः प्रार्थनारूपं भजते। भगवतः गुणानुसंधानमेव तत्र प्राधान्यं भजते।

उत्तरभारते भक्ताः तुलसीदास-मीराबाई प्रभृतयः भजनोपयोगिन्यः गाथाः अरीरचन्। दक्षिणभारते पुरंदरदासत्यागराजादयः गायनशास्त्र मर्यादानुसारेण कृतीः रचयामासुः। एवंच भजनम् प्रार्थना, ध्यानं, कृति गायनम्, गद्य पद्यादीनां भगवद्गुणानुवर्णनात्मकानां पठनं पाठनं च बहुसुखेन जनैः चिरकालादनुष्ठीयते। अतः प्रार्थना नाम मानवस्य जीवने अपरिहरणीयः एकः प्रधानांश इति युक्तमुत्पश्यामः। अत्रापि विचारणीयं तत्वं अस्त्येव सर्वे व्यापारा मानवस्य सिद्धिमभिवाञ्छन्ति। सिद्धिर्नाम स्वसमीहितार्थस्य प्राप्तिः। साधकाः मन्त्रजपैः दैवशक्तिं स्वेच्छानुसारेण योजयितुं प्रवर्तन्ते। येन रोगनिवारणं, यस्मात् ज्ञानविकासः प्रतिबन्धकविधूननं च एकेनैव साध्यन्ते। मतीयधर्माचरणेऽपि प्रार्थना मकुटायते।

माहम्मदाः प्रतिदिनं पञ्चवारं प्रार्थनां कर्तुमिच्छन्ति। भृगुवासरे तु नियमेन प्रार्थनामन्दिरेषु सर्वे मिलित्वा एव प्रार्थनां कुर्वन्ति। पृथैव स्वमनीपितानि विषयविवेचनान्यपि प्रचालयन्ति। पारसीकाः क्रैस्ताश्च दैवप्रार्थनां एकमेव साधनं जन्मसाफल्ये अभिप्रयन्ति। हैन्दवाः पुनः प्रत्यहं त्रिकाले सन्ध्यावंदनं कर्तव्यतयाङ्गीकुर्वन्ति। शैवाः सायं प्रातश्च शिवपूजां निर्वर्तनीयां मन्यन्ते। एवमन्येषां पद्धतिश्च दृश्यादृश्यतया वर्तते। प्राथमिकशालासु–माध्यमिकशालासु तथैव मौ[illegible]शालासु च दैवप्रर्थनां निर्वाह्य अनन्तरमध्या-

पनं प्रारभन्ते। शास्त्रपाठशालासु अयं नियमः अविरोधेन न प्रचलति। परंतु संस्कृतपाठशालासु ईदृश नियमाः पदं, कृच्छ्रेण लभन्ते। पण्डिताः विद्यार्थिनश्च प्रत्यहं यथासमयं एकीभूय प्रार्थनां न कदापि सम्मानयन्ति। केचन सावकाशेनागच्छेयुः। अन्ये पण्डिताः प्रार्थनाशालां परिहृत्य वृत्तपत्रिकां पठन्तः प्रार्थनाविषये स्वीयं औदासीन्यं प्रकटयन्ति! यदि उन्नताधिकारिणः उपस्थिता भवेयुः तदा प्रार्थनायां अन्विता भवेयुः।

अस्मिन् विषये सर्वकारीयाणां नियमः अस्ति नवेति केचन संशेरते। दैवप्रार्थनाय सर्वैरप्यागन्तव्यमिति सर्वकारीयाधिकारशासने (M. S. R.) यदि नियमः कण्ठरवेण श्रूयेत तथा सर्वैरप्यागन्तव्यमेव। अन्यथा यथाक्रमं प्रार्थनालयमागन्तव्यम्-इति बुद्धिमतामांशका नरीनर्ति। अधिकारीणः अस्मिन् विषये तटस्था एव राजन्ते। विद्यार्थिभिरपि नियमेन किमर्थमागन्तव्यमिति चान्ये गणयन्ति। एवं प्रार्थना कृते अन्या प्रार्थना आवश्यकीव विमर्शकानां प्रतिभाति। सहृदयाः प्रार्थनाया इमां दुर्दशां परिगणयेयुरिति स्मारयामहे।

---

# आहारः

"हृञ्-हरणे" इति धातोः व्युत्पन्नः आहारशब्दः। उपसर्गसमवधानेन अर्थान्तरविलासमातन्वन्ति धातवः। आहारः, विहारः, प्रहारः, संहारः, परिहारः इत्यादयः विभिन्नान् विचित्रांश्च अर्थान् सूचयन्ति। आहारो नाम सचेतनैः स्थावरैः जङ्गमैश्च स्वजीवनस्थित्यर्थं अहरहः आदीयमानाः भौतिकांशाः। पञ्चभूतानि प्रत्यक्षगम्यानि आहत्य वा एकैकशो वा जीवानामपेक्षितानि आहारवस्तूनि अभिवहन्ति। [illegible] आहार-

आददते। मूलैः भूमिस्थं सारजनकं जलसहायेन आकर्षन्ति तेन उपचीयन्ते च। सर्वास्ववस्थासु आकर्षण-विकर्षणेषु तेजः परमं कारणं भवति। अवकाशे-नाकाशः अव्यक्तरूपेण प्रवहतः शक्तिविशेषानन्वेति। एवञ्च भूतानां समवायः आहारतां भजते। यदा आहारत्वं भौतिकांशानां संभवति तदा तेषां दशा जीवा-णुरूपा भवेत्। जीवाणवः कोटिशः सम्भूय प्रधानं पोषयन्ति। तथैव विशर-णेऽपि नाशयन्ति। अयं क्रमः सृष्टेः लयस्य च चमत्कारमावहति। प्राणिनः एवं जीवाणुभिः वर्धिताः सर्वानदन्ति। प्राणिशास्त्रज्ञाः भूगर्भशास्त्रज्ञा श्च कामं तेषां निरीक्षणपरीक्षणैः सिद्धान्तान् अभिदधन्तु। मनुरस्मिन् विषये एवमाह।

चराणामन्नमचराः दंष्ट्रिणामप्यदंष्ट्रिणः।
सहस्तानामहस्ताश्च शूराणां चैव भीरवः॥ इति॥

चतुष्पाज्जन्तवः द्विपदश्च प्रत्यक्षतया भूतेभ्यः आहारं आदातुं अपारयन्तः भूतेभ्यः परिनिष्पन्नात् पदार्थानदन्ति। तृणानि धान्यानि च खादन् जलं पिबन् उच्छ्वास निश्वासैः वायुमासेवयन् चतुष्पदो जीवन्ति। मानवः पुनः प्राणिकोटिषु मूर्धन्यः सर्वभक्षकः संवृत्तः। सर्वेषां जडपदार्थानां भोक्ता, समस्तानां जीविनां शास्ता, रक्षको भक्षकश्च प्रभवति। अस्य अशिशिषा दुर्भरा अनन्ता बहुमुखी च जगदेव रावयति। अस्मात् मानवः मानवमपि क्लिश्नाति।

प्राणिसधर्माऽयं उच्छ्वासेन वायुं आस्वादयन् प्राधान्येन धान्यान्यत्ति। पशव इव धान्यान्यत्तुं अशक्तः सन् पाकप्रक्रियया भक्ष्य भोज्य लेह्य चोष्य पानीयादि भेदेन अनन्तप्रकारान् खाद्यपदार्थान् निर्माय जक्षत् मोदते। भक्ष्यविशेषेषु धान्यानि बहुमुखसंयोगेन खाद्यमानमपि तस्य दुर्भरा तृष्णा सजीविनां मांसमप्याकांक्षति। मानवकल्पितव्यवस्थया अहरहरुपचीयमान-संख्याबलेन पर्याप्तं शाकाहारमुत्पादयितुं अनेनाशक्यमिव प्रतिभाति। तस्मात् गर्धया अवश्यकतया च भूचरान् खेचरान् जलचरांश्च प्राणिनः उपायविशेषैः मारयित्वा स्वजठरपिठरं पूरयितुमीष्टे। व्यवहारशास्त्रज्ञाः मानव-

जातेराहारे पञ्चविंशति भागं मत्स्यानावेदयन्ति प्रतिशतम्। भागद्वयमितरेषां प्राणिनां मांसमिति निरीक्षणैः अधिजग्मुः। अयं विषयः अरुन्तुद एव केवलम्। बहवो मानवाः द्वादशमासेषु कतिपयदिवसेष्वपि मांसं न खादन्ति अलाभात् दारिद्र्यदोषाद्वा। तेऽपि मांसाशिन इत्येव गण्यन्ते नगरस्थानां प्रत्यहं लभ्यते यदि ऋथ्यंमांसमादातुं च शक्तिरस्ति।

नगरं नाम महती पैशाचकी जलूका इव ग्रामीणानां सर्वस्वं सामदानभेदैः यथावसरं दण्डेन च आकर्षति। विचार्यमाणे भयानकमिदं दृश्यं अभिमुखी भवति। ग्रामेषु परिवर्धितं शाकं कूष्माण्डानि कुक्कुटाण्डाश्च प्रतिदिनं नगरमभिधावन्ति। तथा पयः दधि अन्ये च खाद्यपदार्थाः। एवमेव हृष्टपुष्टाः चतुष्पदः नगरमभियन्ति सौनिकागारं प्रति। बुद्धिमान् बालः नियमेन नागरिकः भविष्यति। धनी ग्रामं द्वेष्टि। धनस्य अभिवृद्धौ नगरं तस्मै रोचते। रसिकाः स्वेच्छाचारिणश्च नगरमाश्रयन्ते एवं ग्रामीणाः तेषां सर्वस्वं च नागरिकाणामाहारः।

"दयामूलं सर्वेषां प्राणिनाम्"। सर्वैरपि तीर्थंकरैः एककण्ठेन प्रास्तावि अयं विषयः। स्वजीवने दयायाः उच्चतमं शृङ्गमारोढुं शाकाहारनियमः पीठबन्धः। 'आहारशुद्धौ सत्व शुद्धिः' इति सांप्रदायिकी प्रथा वर्तते। तथापि वातावरणमहिम्ना आहारपदार्थानामलाभात् मिश्राहारः प्रवर्तते। यत्रि परिसरपरिस्थितिभिः मिश्राहारिणः संप्रदायशक्तिं उपलक्षयन्ति तत्रापि शाकाहारस्यावकाशो विद्यत एव। एवमिदानीं देशविदेशेषु अनुस्त्रियमाण आहार फलिककामनुसृत्य शासकाः मत्स्यग्रहणवृत्तिं प्रोत्साहयन्तः मिश्राहारं अप्रत्यक्षतया अनुमोदन्ते।

सम्प्रदायेन शाकाहारिणोपि स्वकीयं आधुनिकनागरिकता भव्यस्वरूपं दिदर्शयिषया मांसाहारं अङ्गीकुर्वन्निति विचारसथनं दूरदर्शिनाम्। सर्वेषु विषयेषु वैज्ञानिक दृष्टिरावश्यकी। आहारो वा विहारो वा भवतु। निष्पक्षपातिनो

वैज्ञानिकाः शाकाहारं मांसाहारं च अधिकृत्य स्वसिद्धान्तं निरवोचन् । ये व्याघ्रादयः स्वभावेन मांसाहारिणः ते नितरामशक्ताः कार्यनिर्वहणे, निरुपयोगिनः शत्रवश्च सर्वेषां प्राणिनाम् । ये जन्मना शाकाहारिणः गवादयः ते नितान्तं बलिनः कार्यनिर्वहणे स्वजीवनस्य सर्वैरप्यंशैः उपयोगिनः सर्वेषां प्राणिनाम् । विशेषेण अन्नदातारः गावः, मानवजातेः मातृस्थानमलंकुर्वन्ति ।

मांसादनेन तात्कालिकी उद्वेगप्रवृत्तिः यद्यपि जायते । तथापि कार्यनिर्वहणसमर्था अनुवर्तमाना चिरकालस्थायिनी शक्तिः शाकाहारिणे एव निष्पद्यते । अतएव शाकाहारिणो दीर्घजीविनः कष्टसहिष्णवः मितसंख्याकैः रोगैः पीड्यन्ते मांसाशिनामपेक्षया निर्मलाः प्रशान्ताश्च भवन्ति ।

मांसादनदृष्टिः परद्रोहं प्रथममाकांक्षति, विनाशदृष्टिमुपचाययति । निर्दयामभिधयति । अतृप्तिमत्याशां च अन्ततः संजनयति । केचन मांसाशिनः दया अहिंसेत्यादि आत्मगुणैरुपेताश्च दृश्यन्ते । प्राञ्चो मुनयः मांसाशिनः आसन् इति ज्ञायते । परन्तु तेजीयसां दृष्टान्तं सामान्यानां सर्वास्ववस्थासु संयोजनमसंगतम् । बौद्धभिक्षवः जैनसाधवश्च एकदा मांसाशिन आसन्निति प्रबन्धेषु वर्णना दृश्यते । किं बहुना भगवान् बुद्धोपि मांसमजक्षत् इति पिटकग्रन्थेषु पश्यामः इति विशंकाः ।

आहार विचारे नियमः केवलं आदर्शमात्रे पर्यवस्यति । वैज्ञानिक दृष्टिः सर्वान् नियमान् कवलयति । अतः शाकाहारमिश्राहार विषयेषु भावुकाः न्यायं धर्मं च मनसि संभाव्य युक्तायुक्तविमर्शनं विदधीरन् ।

# गोविन्दसागरः

मानवस्य साहसः विचित्राणि कर्माणि निष्पादयति। पुरा पुराणेषु भगीरथः पश्चिमसमुद्रयायिनीं गङ्गां मनुष्यप्रयत्नेन परावृत्य पूर्वसमुद्रवहनाय प्रायतत्। तस्मिन् साहसे सः सफलो बभूव। भागीरथी गङ्गोत्तरीतः प्राचीं दिशमनुसरन् मन्दं २ प्रवहति। कियद्दूर एव बृहदाकारेण वर्धते। सर्प भङ्ग्या हिमालयप्रान्तेषु प्रसरति। हिमालयं त्यक्त्वा समस्थलेषु ओषधीनां वृक्षाणां च जीवातुः चकास्ति। व्यवसायेन भूमिं अलंकरोति। कर्षकान् आनन्दयति। भूस्वामिनः तोषयति। श्रद्धालूनां आकर्षणभूः इयं अतिशय-महिमा शोभते। लक्षोपलक्ष जनानां अन्नदात्री कोट्यानुकोटि प्राणिनां जल-भू-खेचरणां जीवातुः आश्रयदात्री च विराजते। किं बहुना मातेव पुत्रान् इयं जीवकोटिमभिरक्षति।

न केवलमियं स्वभावेन मानवान् सेवितुं प्रभवति। मनुष्यबुद्धिः साहसः च प्रधानपात्रं वहतः। उन्नतप्रदेशेषु सेतुबन्धनेन जलं निरुध्यते। सारिणी प्रसारणेन तदेव जलं कर्षकाणां क्षेत्रेषु यथेप्सितं आपूर्यते। ओषधीनां अभिवर्धनेन अन्नं तेन प्राणिनां जीवनं च मनुष्यप्रयत्नेनैव संपद्येत। अनादिकालात् मानवः स्वीयदूरदृष्ट्या विषयविशेषान् आकलयामास। बुद्धिसामर्थ्येन प्रकृतेः शक्तिं कूलंकषं ज्ञातुमीष्टे। स्वाधीने नियन्तुं इच्छति च। इयं मानव-साहसस्य कथा बहुमुखी अनन्तप्रकारा च विजृम्भते। पूर्वस्मिन् काले न केवलमेकः भगीरथः, अनेकाः भगीरथाः विभिन्नविषयेषु आसन्। कालः खलु सर्वभक्षकः तथा सर्वोत्पादकश्च। नास्ति नवीनः पन्थाः कालानुसारेण पुनरावर्तनं साहसकार्याणां नवीनमिति समुदाह्रियते। अनन्तः बहुमुखश्च प्रयत्नः।

आधुनिक भगीरथाः प्राचीनभगीरथं अतिशेरते। हिमालयादुत्पन्नां गङ्गायाः सहोदरीं इदानीं यथामनीषितं नेतुं मानवसाहसः बद्धपरिकरः आस्ते।

उपकारान् बहून् एकपदे सिषाधयिषंति । सेतुः निर्मीयते । पञ्चनदप्रदेशे होशियारपुरमण्डले भाक्रा इति कश्चन ग्रामः वर्तते । काश्मीरदेशादागता (सट्लेज) "शतद्रु" इति नदी तत्र सेतुः विहितः । अयं सेतुः भूगोले अग्र-स्थानं अलंकरोति । यस्मिन् सप्तशतसंख्याकहस्तप्रमाणात् अधिकं जलाशये गाधं जलं स्थास्येत । अचिरेणैव वर्षत्रयाभ्यन्तरे शिल्पीनां कौशल्येन सेतुबन्धनं परिपूर्णं भवति । दुरदृष्टवशात् तत्र प्रमादः संजातः । अतः कालस्य धनस्य च परिमितिः अधिका भविष्यति ।

सारिणीनां खननं दीर्घकालमपेक्षते । सेतुबन्धने पञ्चाशदुत्तरैककोटि संख्याकाः मुद्राः व्ययीकुर्वन्ति सारिणीखनने यन्त्रागार निर्माणेषु विद्युदुत्पादन केन्द्रस्थापनेषु च आहत्य चतुःशतकोटिपरिमिताः मुद्राः विनियुज्यन्ते । पूर्णतया शिल्पकर्म यदा संपन्नं भवति तदनन्तरं भूकरव्याजेन तथा इतररूपैः करैः च प्रतिवर्षं पञ्चत्रिंशदुत्तरएकशतकोटिमुद्राः आयं लप्स्यते ।

सारिणीषु वाणिज्यनावः तथा यानानि च तरन्ति । मत्स्यग्रहणशाखा विभिन्नजातीयानां मत्स्यानां अभिवर्धनेन ग्रहणेन च सारिणीषु प्रभूतं आहारं, धनं च लभते । उन्नतप्रदेशात् जलस्य अवतरणेन जलनिष्ठो वेगः विद्युच्छक्ति-मुत्पादयति । विद्युदुत्पादनकेन्द्राणि युक्तस्थलेषु प्रतिष्ठाप्यन्ते । विद्युच्छक्त्या अशेषाणां यन्त्रागाराणां विद्युच्छक्तिः वितीर्यते । एवं विद्युदुत्पादनं, मत्स्यानि यानं सौकर्यं, कृषिश्चेति चत्वारः प्रधानोपायाः आधुनिक भगीरथैः व्याख्याताः साधिताश्च ।

अतिभीकरा इयं नदी, वर्षाकाले पुनः पार्श्वस्थान् ग्रामानपि निमज्जयति किमुत वृक्षादिकान् उत्सादयत्येव । अस्याः निरोधे प्रथमं मृदा सेतुं निरमा-स्यान् । अनन्तरं उभयोः पार्श्वयोः पर्वते पञ्चाशद्धस्त वर्तुलां सारिणीं यन्त्रमुखेन विधधुः । पादक्रोशपरिमितं एते सारिण्यौ वर्तेते । अनयोः द्वारा नद्याः जलं यस्मिन् उभयोः गिर्योः मध्ये सेतुं [illegible] । प्रायः अष्टसहस्रसंख्याका जनाः

अत्र यन्त्रैः सह कर्म कुर्वन्ति । अमेरिका देशात् आगताः शिल्पिनः पर्यवेक्षकाः च जागरूका कर्तव्यान्निर्वर्तयन्ति । पाषाणानि सिकताः कीकसं च (Cement) यन्त्रैः आनीयन्ते । पाषाणानि आर्द्रीक्रियन्ते कीकसं सिकताश्च मिश्रीकृत्य पीठबन्धस्थाने यन्त्रमुखेनैव वाहयन्ति । अनेन प्रकारेण पदार्थानामानयनं तेषां मिश्रीकरणं, सेतोः स्थानंप्रति वहनं तत्र च्योतनं घट्टनं च सर्वं यन्त्रद्वारा चालयन्ति । अयं मानवानां साहसस्य अत्युत्तमं निदर्शनमिति अभिज्ञाः मोदन्ते ।

देशविदेशादागताः शिल्पिनः राजकारणपटवः अन्ये दिदृक्षवश्च मुक्तकण्ठं इदं मनुष्ययतनं प्रशंसन्ति । प्रवासमन्दिराणि धूमशकटस्थानं तैलशकटाश्च समीचीनतया व्यवस्थापिताः । प्रवासिनः यथेच्छं अत्र विहृत्य प्रतिदिनं शतशः निवर्तन्ते । पुराणः भगीरथः गङ्गां परावृत्य पूर्वां दिशं निनाय । आधुनिकास्तु प्रत्यङ्मुखीं शतद्रुमिमां अनुसरन्त एव बहून् उपकारान् साधयन्ति । कालदेशानुरोधेन कार्यसाधनक्रमः विपरिवर्तते ।

सर्वं धनाधीनमिदानीं जगत् । धनमन्तरा न किमपि प्रचलति । धनोत्पादनायापि धनमपेक्षितम् । एवं मानुषसाहसेन इयं नदी परश्शतवर्षेभ्यः मरुस्थलकल्पां वसुमतीं प्रफुल्ललतागुल्मौषधिवनस्पतिभिः उपशोभितां तनोति ! पञ्चनदक्षेत्रे पेप्सु प्रान्त्ये तथाराजस्थानविषये च सारिणी प्रसारैः भूमिमाप्लावयति । जनेषु आत्मविश्वासं अवस्थापयति । देशस्य संपदं अभिवर्धयति । मानव साहासनिष्ठा कामधेनुरिव इयं नदी जयति । एषु पर्वतश्रेणिषु गुरु गोविन्दसींह पश्चिमतः आगन्तृन् शत्रून् रुरोध । तत्रैवायं जलाशयो निर्मितः । अत एव पुण्यश्लोकस्य तस्य नाम्ना अयं प्रसिद्धो भविता ।

# क्षुद्रोपलः (LITTLE ROCK)

पश्चिमार्धगोले अमेरिकादेशः विद्यते। पुरायं उद्देशः निर्जनारण्यमासीत्। कोलम्बसनाम्ना भारतागमनकाङ्क्षिणा मध्येमार्गं अयं देशः प्राप्तः। इदानीं पुनः भूगोले विद्यमानेषु देशेषु अयमेव देशः सर्वेषु विषयेषु प्राथम्यं प्राधान्यं च भजते। अस्मिन् देशे राजा नास्ति। राज्यं प्रचलति। प्रजा एव नेतारः। शासकवर्गं सम्मतिदानेन निश्चयन्ति। प्रजाभिः निर्णीतं शासकवर्गः पञ्चवर्षपर्यन्तं राज्यतन्त्रं निर्वर्तयति। पुनश्च प्रजानां सम्मतिदानेन वरणं भवति वृता नेतारः शासकाः भवन्ति।

यद्यपि देशः विस्तृतः वर्तते। सर्वस्य देशस्य राज्यतन्त्रचालने एकं केन्द्रस्थानं अस्ति। एकोनपञ्चाशत् संख्याकाः इदानीं यावत् अवान्तरशासन मण्डलानि सन्ति एतानि (States Govt.) इति उच्यन्ते। अतः अवान्तरमण्डलानां अधिकारः तत् २ प्रान्तेषु प्रजातन्त्रनियमेन प्रवर्तते प्रभवति च। एवं प्रवर्तमानेष्वपि प्रान्त्यमण्डलेषु प्रवर्तितानि शासनानि केन्द्रशासनसिद्धान्तानां अविरुद्धान्येव भवितुमर्हन्ति। देशस्य सर्वोच्च श्रेष्ठन्यायालयः अपि विद्यते। सामान्येन सर्वेषु विषयेषु विवादग्रस्तेषु अस्य निर्णयः शिरसा धार्य एव।

प्रान्त्यशासनमण्डलानां निर्णयेन विरुद्धो वा अविरुद्धो वा नात्र विचारः कर्तव्यः। माण्डलिका वा तच्छासनसभासदस्या वा सभाधिपतयो न कदापि न्यायालयस्य निर्णये हस्तक्षेपं कुर्युः। अयमेव बलवत्तरो निर्णयः अङ्गीकरणीयः-निर्दिष्टशासनमण्डलान्वितो वा सर्वानुगतो वा स्यात्। अनेन



केन्द्रशासकवर्गस्य निरंकुशत्वं अपर्यनुयोज्यत्वं च [illegible] अन्यथा अवान्तरमाण्डलिकाः क्षुद्रैः कारणैः परस्परं द्रुह्येयुः। अथवा पार्श्वस्थ

माण्डलिकैः कुर्युः । आर्थिक पारिश्रामिक वाणिज्यादिविषयेषु अकाण्डं घर्षयेयुश्च । बलवत्तरं केन्द्रशासकवर्गस्य नियमनं अपरिहरणीयं भवति ।

सर्वाः प्रजाः जन्मना समानाः भूयासुः, जीवननिर्वर्तने विभिन्नवृत्तीनामनुसरणेपि स्वतन्त्राः स्युः । तान्त्रिकविज्ञाने, तथा सामान्यविद्याभ्यासे च अविशेषेण अवकाशं सहायं च लभेरन् । राज्यतन्त्रनिर्वहणाय स्वयं प्रेरिताः स्वाभिमतं नेतारं वृणीयुः । वृताः केन्द्रशासकवर्गं व्यक्तीनां योग्यतामधिकृत्य निश्चयेयुः । एवं केन्द्रेण साक्षात् परंपरया च स्वातन्त्र्यं प्रजानां रक्षितम् । योग्यानामवकाशः आदृतः । अनर्हाणां निर्माल्यत्वं च संपादितम् । निरंकुशत्वं देशस्य ऐकमत्यस्थापने रक्षणे च अङ्गीकृतम् । अनेन प्रकारेण अशेषे भूगोळे प्रवर्तिष्यमाणराज्यतन्त्राणां आदर्शत्वं प्रख्यापितम् । शिल्पे, व्यवसाये वैज्ञानिकाविष्करणे, यन्त्रनिर्मापणे, आरोग्यरक्षणे, वाणिज्ये, अन्तरराष्ट्रीय राजकीय आर्थिकविषयेष्वपि सार्वभौमत्वं प्रतिष्ठापितम् ।

एवं स्थितेऽपि सर्वाङ्गीणविभवे अद्यत्वे स्थापितस्य एकोनपञ्चाशत्तमस्य प्रान्त्यशासनमण्डलस्य कथा विमर्शकान् विस्मापयति । इदं अलास्का प्रान्त्य मित्यभिधीयते । अस्मिन् क्षुद्रोपलं (Little Rock) नाम नगरमस्ति । अत्र षोडशसहस्र संख्याकाः गौराङ्गाः विद्यार्थिनः अधीयन्ते । केवलं षष्टिसंख्याकाः कृष्णवर्णीयाः विद्यार्थिनः शालासु प्रवेशं उदीक्षन्ते । गौराङ्गैः सह विद्याभ्यासः एषां माभूदिति श्वेतवर्णीयानामाघोषः आसीत् । मण्डलाधिपतिः इमं पक्षमनुससार । कृष्णवर्णीयाः न्यायालयेषु अभियोगं प्रावर्तयन् । प्रान्तीय न्यायाधीशाः श्वेतवर्णीयपक्षमेव साधयामासुः । मण्डलाधिपतिश्च अनुमेने । अनन्तरं सर्वोच्च श्रेष्ठन्यायालये प्रातिस्विकरूपेण इमं विषयं न्यायनिर्णयाय उपसमर्पयन् । तत्र न्यायमूर्तिनः आमूलाग्रं परिशील्य कृष्णवर्णीयाः श्वेतवर्णीयैः सह शालासु अभ्यसन्तु, इति निर्णयं व्यतरन् । अलास्काशासन मण्डलाय सूचानां च ददुः ।

. एतदन्तरे मण्डलाधिपतिः पक्षपातगमाः केन्द्रशासनवर्गस्य सूचनामभ्यूह्य स्वमनीषितं साधयितुमारेभे। पाठशालाः यदि राज्य–शासनान्तर्गताः तथा सर्वासां प्रजानां प्रवेशः समानः स्यात् ता एव स्थलीयप्रजातन्त्रायत्ताश्चेत्, तासामभिप्रायं पोषयन्ति। फलतः कृष्णवर्णीयानां विभिन्नाः पाठशालाः सन्तु। प्रान्तीयशासनेन उभयसंस्थाभ्यः धनसहायं विदधामः। अनेन उपायेन श्वेतकृष्णवर्णीययोः वैमनस्यं न वर्तते। प्रजासु शान्तिः संलस्यते। परस्परं घर्षणं नास्ति। केन्द्रशासनवर्गस्य नियमः विफली कृतश्च भवति। अभीप्सितेषु विषयेषु अङ्गीकृतश्च स्यात्। एवमादि दुरुद्देशेन व्यवस्थां परिवर्तयितुं आलोचयामास।

अमेरिकादेशे प्रथमं विभिन्न प्रान्तीयाः (इङ्लेण्ड्, फ्रान्स, ऐर्लेण्ड, स्पेयिन्) सम्मिलिताः आसन्। अरण्यं छित्वा नद्यः सेतुभिः निरुध्य जनपदं विदधुः। अस्मिन् साहसे शारीरकं कर्म कर्तुं दक्षिणआफ्रिका देशात् जनान् आनिन्युः। नौभिः पाषाणनि यथा आरोप्य बलात्कारेण बध्वा, छित्वा, तर्जन भर्जनैः हिंसित्वा, स्वीयं अमानुषत्वं विश्वेभ्यः प्रकटी चक्रुरिति-ऐतिहासकाः वदन्ति। अस्मिन् विंशतितमे शतमानेऽपि अमानुष दौर्जन्यं अमेरिकादेशे आसीत् इति उदाह्रियते। कृष्णवर्णीयस्य मारणं मोदावहः। नतु दोषावहः। सजीवस्य कृष्णवर्णीयस्य भर्जनं गौराङ्गानां विनोदाय इति केचन ऊचिरे। कथा तु एवं श्रूयते। न वयं प्रत्यक्षदर्शिनः। किंतु वृत्त पत्रिकासु मुद्रिताः दुरन्तकथाः अपठाम। अमेरिकादेशादागतान् प्रावासिकान् अपृच्छाम। ते तत्वमभ्युपगम्य इदानीं तादृशव्यतिक्रमस्य. अवकाशो नास्तीति सप्रश्रयं जगुः।

आलोच्य सर्वमिदं तत्वं निष्पद्यते। केन्द्रशासनस्य बलीयसी अपर्यनुयोज्या शक्तिः सर्वहितरक्षिणी भूयात्। प्रान्तीयशासनानां सर्वात्मना विधेयता केन्द्राय स्यात्। सर्वजनानुरागितां केन्द्रस्य राज्यतन्त्रं सम्पादयतु। येन बल-प्रजातन्त्रवादिनः अशेषे भूगोले क्षुद्रोपलकथया स्मारिता भवन्तु। येन बल-वत्तरकेन्द्रशासनस्य शक्त्यै प्रह्वीभूयासुः।

# प्रवासानुभवः

सजीवाः प्राणिनः सर्वेऽपि नियमेन अनेकैः कारणैः देशाद्देशान्तरं जिगमिषन्ति। विशेषेण मानवाः अस्मिन् विषये प्रागल्भ्यमाददते। कारणानुसारेण प्रवासे अभिरुचिः उत्पद्यते। मनोविनोदनाय तथा बन्धुमित्रदिदृक्षया वाणिज्यकृते च सामान्येन प्रविविक्तः भूयसी लोके चकास्ति। एवं स्थिते प्रवासः सामान्येन परिहरणीयो वा अभिवांछनीयो वा इति संशेरते जनाः। वेदव्यासः प्रवासमुद्दिश्य वनपर्वणि यक्षप्रश्नावसरे एव निजगाद

पञ्चमेऽहनि षष्ठे वा शाकं पचति स्वे गृहे।
अनृणी अप्रवासी च स राज्ञिचर मोदते।

इति प्रवासस्य दुःखहेतुतां अभिप्रैति। एवमेवाधमर्णतां च अवोचत्।

वर्तमानकाले पुनः राष्ट्रीयव्यापाराः अन्तरराष्ट्रीयवाणिज्यं च नियमेन आर्थिकविनिमयमपेक्षते। अनुक्षणं राज्यशासकाः देशाद्देशान्तरं गच्छन्ति, वाणिज्यं च प्रवासमन्तरा नोपपद्यते, लेखकाः, पण्डिताः, वृत्तपत्रिका व्याख्यातारः, निवेदका श्च शीघ्रतरवाहिभिः वाहनैः धावन्ति। इदानीं वयं व्यासस्य वचनं समयानुरोधेन अधिगच्छामहे। तथाहि निर्बन्धेन ऋणादानं, निर्बन्धेन प्रवासः च दुःखहेतुतां भजते। उदर्के लाभमुद्दिश्य ऋणादानं मोदायैव भवति। तथैव मनोविनोदनाय लोकानुभवाभिवृद्ध्यै विभिन्नानां शास्त्रपद्धतीनां परिचयाय क्रियमाणः प्रयासः व्यक्तेः सर्वाङ्गीणसमुन्नत्यै प्रभवति। नितरां वेगेनेदानीं वयं व्योमयानेन उड्डयेम। धूमशकटेषु यथा सौकर्यं अनुधावाम जलेनौकासु शक्तिचालितासु विनोदेन मार्गं अतिवाहयाम। एवं भू-जल-व्योम्नां प्रवाससौकर्यं चिरंतनं दुःखहेतुभूतं मानवः पर्यवर्तयत् प्रवासं ऋणादानं च।

पशवः तृणान्यत्तुं स्वग्रामसीमायां चरन्ति। यदि ग्रामसीमामतिक्रमेरन् गोपालस्य दिग्दर्शनमन्तरा न प्रतिनिवर्तेरन् मानवोऽपि अविज्ञात-

स्थलेषु इतस्ततः अटन् पशुरिव भ्राम्येतापि। इदानीं विज्ञानमहिम्ना देश-विदेशानां परःशतवर्षीयमितिहासं सुविशदमधिगच्छामहे। भूगोलविज्ञानेन तत्तद्देशीयं प्रकृतिसौन्दर्यमभिनन्दामः तीर्थक्षेत्राणि अभिवन्दामः। नागरिकतां कलानां च आकारविशेषान् परिभावयामः। वातावरणं,रोरुह्यमाणओषधीनां रस–वीर्य–विपाक–विशेषानधिगच्छाम। न केवलं मनसा विजानन् तृप्यति मनुष्यः। गमना–गमने संदृब्धान् वाहनमार्गानपि करबदरसमानं भूपटवर्णनात्मकैः चित्रैः विजानाति। यत्र अनन्तरं आर्थिकसंपत्, प्रवासमन्दिराणि, भोजनागाराणि, द्रष्टव्यस्थलविशेषाः प्रेक्षणीयानि कलाकौशलानि, परिचययोग्य महाप्रभावाश्च सामन्येन ज्ञातुं शक्यन्ते। धूमशकटदिग्दर्शिनी एतान् सर्वानर्थान् निपुणतरं परिचाययति। वैमानिक दिग्दर्शिनी अन्तरराष्ट्रीय वायुमार्गानावेदयति। परस्परं मार्गाणां संबन्धश्च वैमानिकसंस्थावद्भिः संकेतितः, यस्मात् प्रवासी एकदैव स्वीयप्रवासं निश्चिनुयात्। सर्वेषु स्थलेषु तत्तत्कर्मचारिभिः सादरं सत्कारं दिग्दर्शनं च लभेत्।

भूगोलस्य परिधिः प्रायः द्वादशसहस्रक्रोशपरिमितो(24,000 Miles) वर्तते। पूर्व पश्चिमं उत्तर दक्षिणं चायमेवान्तरः क्वचित्किंचिद्व्यत्यासेन स्यात् अत्र चतुर्थभागात्मिका भूमिः। एनां भागत्रयात्मकजलं विष्टभ्नाति। इदं पूर्वार्धगोलं पश्चिमार्धगोलमिति विभक्तं द्वेधा। पुनः पञ्चखण्डात्मकामिति आहत्योपवर्णितम्। अस्मदीया भारतभूमिः एषिया खण्डान्तर्गतो विराजते प्राञ्चः मज्जन्महानदीषु, तीर्थयात्राणि सिषेविरे भक्त्या। भावुकाः प्रकृति सौन्दर्यानुभुत्सया नदीः, काननानि, समुद्रान् पर्वतांश्च भेजिरे। अयमुपायः तेषां प्रवासाय अकल्पत। मध्यकाले वाणिज्यार्थं आक्रमणार्थं च प्रवासे तत्पराः पर्यभ्रमन्। इदानीं पुनः अनेकैः कारणैः विशेषेण मनोविनोदनाय च देशाद्देशान्तरं अहमहमिकया गच्छन्ति। प्रवासस्य गभीरतां अधिगन्तुं दिङ्मात्र मुदाहरामः। अमेरिकादेशात् प्रतिवर्षं सप्तलक्षपथिकजनाः मनोविनोदनाय आनन्दानुभवाय च देशान्तराण्यटन्ति। येषु काश्मीर दिदृक्षवः १५९६ तमे वर्षे पञ्चदशसहस्रसंख्याकाः काश्मीरसौन्दर्यं अन्वभवन्। विदेशीयेभ्यः भारतं

अनेकैः कारणैः रोचते । कामनारमणीयता अतिलोककलाकौशलं शिल्पेषु, निरुपमानसौन्दर्यं-चित्रेषु, स्पृहणीय वैजात्यं नाट्ये, सुमधरा, संकीर्णता गाने, विशेषेण दक्षिणभारते सहृदयान् मानवानाह्लादयति । प्राच्यावाच्य पाश्चात्याः अविशेषेण मोमुह्यन्ते भारतस्य पर्यटनेन । भारतवासनाय च विदेशीय प्रवासिना मागमनेन मोदावहो लाभः आर्थिक विनिमय व्याजेन लभ्यते । १९५६ तमे वर्षे षोडशकोटिसंख्याकाः रजतमुद्राः प्रवासिभ्यः भारतआर्थिकशाखाव्यवस्थाभिः अलभन्त । तस्मात् प्रवास इदानीं मनोविनोदनाय कल्पते, आर्थिकलाभं वितनुते, अभिप्रायविनिमयं आकुरुते, विप्रकृष्टेषु सहृदयत्वं प्रतिष्ठापयति, किं बहुना सर्वेषां यथाधिकारं अल्पं बहु वा उपकारं आतनोतीति सर्वं चतुरश्रम् ।

विजयताम् प्रवासः ।

# विज्ञानदृष्टिः

पुरा मानवः स्वनिवासभूमिं भूगोलं अचलं इति मेने । पूर्वापरपर्यालोचनया खगोले देशाद्देशान्तरं ग्रहनक्षत्राणि भ्रमन्तीति निश्चित्य वसुन्धरा भ्रमति वा न वा इति पौराणिकानां कातान्तिकानां च वादप्रतिवादाः बभूवुः । अद्यत्वे विज्ञानसाधनैः गोलान्तरजिगमिषा वर्तते । चन्द्रमण्डलं प्रति कृतको ग्रहः प्रेषितः । अन्यः ग्रहः चन्द्रस्य परभागचित्राणि आकर्षण विद्युत्तरङ्गैः भूगोले निरीक्ष्यमाणेभ्यः वैज्ञानिकेभ्यः प्रेषयामास । अभूतपूर्वात् अस्मात् साहसात् रष्यादेशीय वैज्ञानिकाः चन्द्रमण्डलस्य परभागं सुविशदं अधिजग्मुः ।

वैज्ञानिकाविष्करणसिद्धान्ताः अतीव चंचलाः वर्तन्ते । वर्तमानकालीनः सिद्धान्तः आगत्यां निराक्रियेतापि । सौरव्यूहे विद्यमानेषु ग्रहनक्षत्रेषु चन्द्रम-

ण्डलं सन्निकृष्टमिव वर्तते। ग्रहगतिः लक्षोपलक्षवर्षेषु ग्रहान् स्थानान्तरं प्रापयेत्। तदा इदानींतनसिद्धान्ताः अश्रद्धेया भविष्येरन्। एवमेव प्राच सिद्धान्ताः इदानींतननिरीक्षणै निरपन्नैः नानुयन्ति। न चात्र विस्मयस्य संशयस्य वा अवकाशः। ग्रहनक्षत्राणि गतिमहम्ना स्थानान्तरं प्राप्नुवन्ति। तदा सर्वे नियमाः विपरिवर्तन्ते। चन्द्रः न स्वयं प्रकाशते इति राद्धान्तः सनातनो वर्तते। भूमेः छाया उपरागायते इति निश्चितः। अनेन सामान्य नियमाः अनुल्लंघनीयाः अपरिवर्तनीयाश्च केचन स्युः। अन्ये नियमाः काले २ संस्करणमर्हन्ति।

कार्तान्तिकाः फलभागं गणितभागं च भेदेन विशदीचक्रुः। उभयोः गणितशास्त्रस्य सहायः आवश्यकः। बहवो ग्रहाः अनेकानि नक्षत्राणि खे द्योतन्ते च। तथापि ज्योतिषं सौरव्यूहान्तर्वर्तिनां नवानां ग्रहाणां अधिकृत्यैव गणनां आतनोति। इदानीं मानवः अचिरेणैव चन्द्रमण्डलं सशरीरः जिगमिषति। योगिनः योगबलेन अकुतोभयाः लोकान्तरेषु संचरन्तः आसन् इति कथाः श्रूयन्ते। इदानीं पुनः चन्द्र शुक्र मङ्गल ग्रहान् प्रतिजिगमिषन्तः वैज्ञानिकाः अनुकूलान् प्रतिकूलांश्च आलोचयन्ति। दूरदर्शकयन्त्रमुखेन ग्रहाणां स्थानविशेषान् आकलयन्ति। कृतकग्रहाणां प्रेषणेन तत्रस्थ वातावरणं स्वरूपं स्वभावं च करबदरसमानं अधिगमिजिषन्ति। इतः एक शतमानाभ्यन्तरे मानवः निःशंकं अनिरोधेन अन्तर्ग्रहयानदीक्षायां सिद्धहस्तो भवेदिति महाजनानां विश्वासः।

अतएव प्रायः वेदसंहितासु ज्योतिर्गणितस्य वर्णनं उपलभ्यते। वयमिदानीं गणितशास्त्रस्याभिवृद्धिं श्लाघामहे। अथर्ववेदीयैः सूत्रैः उच्चतमं गणित शास्त्रज्ञानं सुलभेन ज्ञायत इति विमर्शकानां सिद्धान्तः आविष्कृतः। शतवर्षेभ्यःप्राक् विदेशीयविद्याभ्यासेन मोहिताः संस्कृतवाङ्मये विमानवर्णनं केवलं मुग्धभाषितं इति उपहसन्तः आसन् इति शुश्रुम। वयमिदानीं वैमानिक [illegible] एवमेव कथनार्थः कदाचिदसंभव मानिनीभिः विमानेषु पानीयं [illegible]

इव द्योतते। कालान्तरे सुकरो भविता। अनयैव दिशा अस्मदीयैः शरीरैः सह गोलान्तरगमनं संभवेतापि। तदा वेदेषु सूचितस्य ज्योतिर्गणितस्य प्रामाण्यं प्रतिष्ठाप्यते। पुराणेषु अनूदितानां कथानां वास्तविकता निश्चीयते। लोकान्तरगमनविषयक इतिहासाः श्रद्धेयाः' भविष्यन्ति। निरीक्षणैः परीक्षणैश्च व्यवस्थापितान् विषयान् न कोऽपि परावर्तयितुं दृष्टे शक्यते वा केनापि।

हेतुवादः वर्तमानयुगस्य जीवातुः। अस्य महिम्ना आर्थिकशास्त्रे प्रजासत्तावादः समजनि। राजकीयविभागे प्रजास्वाम्यं अङ्गीकृतम्। नीतिनियमादिषु व्यक्तिस्वातन्त्र्यं सर्वैरप्युपलब्धम्। तथापि वर्णद्वेषः प्रबलेन दुर्बलस्य बाधश्च इदानीमपि तत्र तत्र अनुवर्तते। तथापि आयत्यां इमे द्वेषाः निरन्वयविनाशमाप्नुयुः इति आशावादिनां निश्चयः। अभिप्रायेण सर्वे मानवाः एकीभूता इव वर्तन्ते। तथापि देशान्तरेषु विद्यमान मनुष्यैः कल्पितनियमानां राज्यक्रमाणांश्च परस्परं भेदमवगच्छन्तोऽपि न सर्वात्मना ऐकमत्यं भजन्ते। एवं हेतुवादस्य गुणाः दोषाश्च भूयांसः विद्योतन्ते।

With the growing sense of nationalism and internationalism, the leaders and thinkers of India gradually have realised that a thorough understanding of our National culture is a necessity. The wisdom of National culture emanated from ancient seers is astonishingly condensed in the " Upanishads " and the " Bhagavadgeetha ". A number of translations and commentaries offered from time to time by eminent authorities are in evidence. But most of them are confined to academic field.

A thorough understanding of the original may help seeker to get into the real spirit of the Text. In this regard here is an attempt made by the members of " Samskritha Sangha " under the Caption of " Upanishad Patavali " and " Geetha Patavali "...." Upanishadroopaka " and " Geetha Roopaka ".

Readers are requested to follow these brief lessons with a view to understand the conceptions and imbibe the higher values of life recorded in the magnificient immortal texts, the " Upnishads " and the " Bhagavadgeetha ".

Copies can be obtained from :

Secretary, " Samskritha Sangha "
Samskrit College Hostel,
Bangalore-18.

---

Printed by K. Seetharam Alva
at SADHANA PRESS
5th Main Road, Gandhi Nagar, Bangalore-9